तनामास्यात्वैद्यन्यंभैक्षजीविका॥पाषंडकौलिकौखंजनरतय
तिमैथुनं॥८८॥अभावोंगनात्यागस्तुरगब्रह्मचर्यकं॥सुखघंटाहुल
हुलीनागवीटस्तु रोकरः॥८९॥खरकस्त्र्यक्षरंच्याथदारकर्मकर
ग्रहः॥वाधुक्यंचविवाहेस्यात्कुहलिःपूगपुष्पिका॥९०॥नांदीकौ
तोरणस्तंभोसुरतत्वभिमानितं॥धर्षितंसंप्रयोगोनारतंचाब्रह्मच
र्यकं॥९१॥उपस्थस्पर्शंत्रिभद्रंचक्रीडारत्नंमहासुखं॥ इतिब्रह्मवर्गः॥
द्विजलिंगीनृपःस्वत्र क्षत्रियोथप्रजेश्वरः॥राजाधिपोमंडलेशएक
जन्माभपापहः॥९२॥ स्कंधावारस्यात्कटकःशिविरंतुबलस्थितिः
आदिराजःपृथुर्वैण्यः काकुत्स्थस्तुपुरंजयः॥९३॥यौवनाश्वस्तुमां
धातौखट्वांगस्तुदिलीपराट्॥रामोदाशरथिःकौशल्याजनिर्दशकं
ठजित्॥९४॥मैथिलीजानकीसीतावैदेहीभूमिजाचसा॥रामपुत्रौ
कुशलवौवेकयोस्त्याकुशीलवौ॥९५॥सौमित्रिर्लक्ष्मणोमेघनाद
जिद्धाथरावणः॥राक्षसेंद्रोदशमुखोलंकेशोधनदानुजः॥९६॥मं
दोदरीशःपौलस्त्योमेघनादस्तुशक्रजित्॥ हनूमान्हनुमानांजन
योयोगचरानिली॥९७॥हिडिंबारमणोरामदूतश्चैवार्जुनध्वजः॥
ऐंद्रिस्तुवालीवालिश्चसुग्रीवोरविनंदनः॥९८॥ऐलःपुरूरवावोथि
रुर्वशीवल्लभश्चसः॥ययातिर्नाहुषिःशाकुंतलेयोभरतस्स्मृतः॥९९॥

---

द्वेभैक्षजीविकायाः द्वेपाखंडस्यद्वेपतिगोप्यरते॥८८॥अभावात्स्त्रीत्याग
स्यैकद्वेसुखघंटायाः चत्वारिनागवीटस्य॥८९॥चत्वारिविवाहस्यद्वेविपा
द्दपुष्पादे॥९०॥द्वेमगलस्तंभस्यदशसुरतस्य॥९१॥चत्वारिक्षत्रियस्य
त्रीणिराज्ञः त्रीणिमंडलेशस्य॥९२॥द्वेसेनायाः द्वेसेनास्थानस्यत्रीणिपृ
थोः द्वेकाकुत्स्थस्य॥९३॥द्वेमांधातुः द्वेदिलीपस्यचत्वारिरामस्य॥९४॥
पंचसीतायाः द्वेरामपुत्रयोरेकैकएकोक्त्यैक॥९५॥त्रीणिलक्ष्मणस्यसप्त
रावणस्य॥९६॥द्वेमेघनादस्यअष्टहनूमतः॥९७॥त्रीणिवाले द्वेसुग्रीवस्य
॥९८॥चत्वारिपुरूरवसः द्वेययाते चत्वारिभरतस्य॥९९॥चत्वारिका

दौष्यंतिः सर्वदमनोऽर्जुनो बाहुसहस्रभृत्॥ हैहयः कार्तवीर्यश्च पुण्यश्लोकस्तु बाहुकः॥२००॥ नलोऽश्वविच्चैष धर्मश्च महाभीष्मस्तु शांतनुः॥ प्रतीपोऽस्य प्रिया काली दासेयी च झषोदरी॥२०१॥ विचित्रवीर्यश्चित्रांगदः सूर्योजनगंधिका॥ व्यासमाता सत्यवती गांगेयो गांदिनीसुतः॥२॥ देवव्रतः शांतनवो गांगो गांगायनिश्च सः॥ भीष्मः कौणपदंतश्च स्वेच्छामृत्युः पुरा वसुः॥३॥ धृतराष्ट्रस्त्वंबिकेयः पांडुर्माद्रीपृथापतिः॥ दुर्योधनस्तु कुरुराड्गांधारेयः सुयोधनः॥४॥ धर्मपुत्रोऽजमीढः स्यात्कर्णानुजयुधिष्ठिरौ॥ अजातशत्रुः कांकोऽथ भीमसेनः कटव्रणः॥५॥ वीररेणुर्नागबलो गुणकारो वृकोदरः॥ बककीचककिर्मीरजरासंधहिडिंबजित्॥६॥ पार्थः किरीटी गांडीवी गुडाकेशो बृहन्नलः अर्जुनः फाल्गुनो जिष्णुर्विजयश्च धनंजयः॥७॥ सव्यसाची सुभद्रेशः शब्दभेदी कपिध्वजः॥ वात्रे प्रश्वापि बीभत्सु द्रौपदी पांडुशर्मिला॥८॥ पांचाली पार्षती कृष्णा वेदिजा नित्ययौवना याज्ञसेन्यथ राधेयो वसुषेणोऽर्कनंदनः॥९॥ घटोत्कचांतकः कर्णश्चंपेशः सूतपुत्रकः॥ द्रोणस्तु गुरुराचार्योऽश्वत्थामा तु कृपीसुतः॥१०॥ द्रौणायनोऽथ राजर्षिर्जनमेजयसंज्ञकः॥ पारीक्षितोऽप्यथ जरत्कारुर्यायावरो मतः॥११॥ प्रियास्य मनसा देवी जरत्कारुरथैतयोः॥ आस्तीकनामा तनयो विरोचनसुतो बलिः॥१२॥ बाणो बिंध्यावलीपुत्रः स्याद्वृत्रो प्यहिश्च सः॥ दमघोषसुतश्चैद्यश्चेदिराट् शिशुपालकः॥१३॥ बार्हद्रथिर्जरासंधः कंसः स्यादुग्रसेनजः॥

---

र्तवीर्यस्य पंच नलस्य॥२०१॥ त्रीणि शांतनोः अष्ट सत्यवत्याः॥१॥ दश भीष्मस्य॥२॥ द्वे धृतराष्ट्रस्य त्रीणि पांडोः चत्वारि सुयोधनस्य॥४॥ षट् युधिष्ठिरस्य एकादश भीमसेनस्य॥५॥६॥ षोडशार्जुनस्य॥७॥ अष्ट द्रौपद्याः॥८ सप्त कर्णस्य॥९॥ त्रीणि द्रोणस्य त्रीण्यश्वत्थाम्नः॥१०॥ त्रीणि जनमेजयस्य द्वे जरत्कारोः॥११ द्वे तस्त्रियायाः तत्पुत्रस्यैकं द्वे बलेः१२ द्वे बाणस्य त्रीणि वृत्रस्य चत्वारि शि

कर्णीसुतोमूलदेवोमूलभद्रःकलांकुरः ॥१४॥ मन्त्रीग्रंथिहरोमात्योद्वाः
स्थितोवेत्रधारकः ॥ द्वौसाधिकोवर्तरूकोगर्वाटोदंडवासिनि ॥१५॥ स
द्पांसुकिलःस्नेहीवयस्योप्यथवार्तिकः ॥ वार्तापन प्रवृत्तुज्ञोमौदूतो
दैवलेखकः ॥१६॥ चित्तोक्तिःपुष्पशाकटीदेवप्रश्नउपश्रुतिः ॥ लेखको
मसिपण्यःस्याद्धोरकःकिरिकोपिसः ॥१७॥ मासीधानीमसिमणिर्मे
लांधुर्वर्णकूपिका ॥ मसीजलंतुमेलास्यात्पराजनमसिर्द्रुघो ॥१८॥
लेखनीवर्णतूलीस्याल्लेखोवाचिकहारकः ॥ वर्णदूतःस्वस्तिमुखःके
चेलंतन्निबंधनम् ॥१९॥ लेखस्थानंग्रथकूटीमुद्राप्रत्ययकारिणी
पांथुर्गंतुश्चपथिकोहारिःपथिकसंततिः ॥२०॥ संदेशःप्राभृतकौश
ल्युत्कोचस्तूपदानकं ॥ जनांतिकंत्वप्रकाशोलुंडीस्यान्न्यायसार
णी ॥२१॥ तांबुलदोबाग्गुलिकः सवाहकोंगमर्दकः ॥ चामरंरोमगु
त्संचकेशरंचावचूलकं ॥२२॥ कुंठेरुर्मेथरुःप्रोतोत्सादनंवस्त्रकुट्टि
मं ॥ छत्रंपुटोटजंराजशृंगकनक दंडके ॥२३॥ हस्तीमहामृगः
पीलुःसिंधुरोदीर्घमारुतः ॥ राजीवोजलकांक्षश्चनिर्झरःकरटीक
टी ॥२४॥ विलोमजिव्हांत स्वेदपिंडपादललालकाः ॥ वरांगःपुष्करी
शूर्पकर्णसामजपेचिलाः ॥२५॥ करिणीचासितागंभीरवेधंकुशदु
र्धरः ॥ चालकव्यालकौराजबाल्होविजयकुंजरः ॥२६॥ ईशादंतोम
हादंत कर्णास्फालेश्चलद्झलो मदप्रयोगोव्यस्तारविक्कस्तुकरि
शावकः ॥२७॥ आरस्रःकुंभसंधिःस्यात्संदानोप्टीवतोधरः ॥ ना

---

द्वेजरासंधस्यषट्कंसस्य१४त्रीण्यमात्यस्यषट्द्वास्थितस्य१५त्रीणिवयस्यस्य
त्रीणिप्रवृत्तिज्ञस्यद्वेगणकस्य१६चत्वार्याकाशवाण्याःचत्वारिलेखकस्य१७॥
चत्वारिमसिधान्या द्वेमसीजलस्यद्वेकज्जल्याः ॥१८॥ द्वे रूलमस्यचत्वारिले
खस्यपत्रीनिबंधनस्यैक१९द्वेलेख्यस्थानस्यद्वेमुद्राया त्रीणिपथिकस्यद्वेप
थिकसंपत्य२०त्रीणिसदेशस्यद्वेउत्कोचस्यद्वेअप्रकाशस्यद्वेन्यायसारिण्या
२१द्वेतांबूलदस्यद्वेअंगमर्दकस्यचत्वारिचामरस्य२२द्वेचामरवातस्यचत्वार

सापूर्वेस्थूलहस्तौदंतमूलेकरीरिका ॥ २८ ॥ शंखकटौदंतमध्यंप्रवेष्टः
पृष्ठतल्पने ॥ आयस्कारःप्रजंघाग्रेप्रोहश्चारणपर्वणि ॥ २९ ॥ ननागात्रा
वरेनीलीकर्णाराकर्णवेधनी ॥ आलानेशंकुरस्तंभःशारिर्गजबंध
नी ॥ ३० ॥ पाशीतुशृंखलाहिंजीरोस्त्रीस्यादंकुशश्रमः ॥ पित्तज्वरःपा
कलोस्यकूटपूर्वस्त्रिदोषजः ॥ ३१ ॥ अश्वक्षिल्कोहरिक्रांतःशालिहो
त्रश्चमुद्गभुक् ॥ श्रीपुत्रश्चामरीहेमीराजस्कंधोमरुद्रथः ॥ ३२ ॥ वाता
यनश्चैककशफोयस्तुपंचांगपुष्पितः ॥ सपंचभद्रःस्तूर्याश्वेवातातद्ध
रितौसमौ ॥ ३३ ॥ ययावरोश्वमेधीयःपारसीकःपरार्दनः ॥ आवृत्तज
श्वयोस्कस्कःसिंधुवारोह्ययोत्तमः ॥ ३४ ॥ वाताश्वजात्याः ॥ जानेयावे
शरोश्वतरःखरः ॥ श्रीवृक्षकोह्रदावर्तोरोचमानोगलोद्भवः ॥ ३५ ॥ ऊ
र्ध्वास्थितिःपुरुषिकेविक्रांतिस्तुपलायितं ॥ पुलासन्नाहप्रखरौक
वियंकविकोच्यते ॥ ३६ ॥ ग्रीवाघंटाघर्घरास्याद्रश्मिःप्रचयणंचतत
॥ प्रतोदः ॥ श्चखुरोचिंखःपुटोलुंठनवेल्लने ॥ ३७ ॥ वल्गादंतालिकाप
ल्ययनंपर्याणमस्यतु ॥ पंकाग्रभागःस्यादश्ववारोवल्लभपालकः
॥ ३८ ॥ नंदिघोषोर्जुनरथोनीतिघोषस्तुगीष्पतेः ॥ चंकुरंघोरणेपा

---

छत्रस्यद्वेस्वर्णदंडछत्रस्य२३ द्वाविंशतिर्हस्तिनः२४२५ द्वेकरिण्याःचत्वार्यंकुशा
वेतुः द्वेविजयगजस्य२६ द्वेगजदंतस्यद्वेकर्णास्फालस्यद्वेप्रमदप्रयोगस्यद्वेकरि
शावकस्य २७ द्वेकुंभसंधेःसंदानस्यैकंनासापूर्वस्यैकंद्वेदंतमूलस्य ॥ २८ त्रीणिदं
तमध्यस्यद्वेपृष्ठतल्पनस्यद्वेप्रजंघाग्रस्यद्वेचरणपर्वणः२९ द्वेगात्रावरयोरे
कैकंपंचकर्णवेधिन्याःत्रीणिगजबंधनस्तंभस्य३० त्रीणिशृंखलायाःत्रीणिअं
कुशस्यद्वेहस्तिपालकस्य३१ द्वादशाश्वस्य३२ त्रीणिपंचभद्रस्यद्वेसूर्याश्वस्य
३३ द्वेअश्वमेधीयस्यत्रीणिपारसीकाश्वस्यद्वेसिंधुदेशाश्वस्यद्वेकुलीनाश्वस्य३४
त्रीण्यश्वतरस्यद्वेअश्वहृदावर्तस्यअश्वगलावर्तस्यैकं३५ ऊर्ध्वावर्तस्यैकंद्वेअ
श्वगतेःत्रीणिसन्नाहस्यद्वेकविकायाः ॥ ३६ ॥ द्वेग्रीवाघंटायाःत्रीणिप्रतोदस्य
त्रीणिखुरस्यद्वेलुंठनस्य३७ ॥ त्रीणिवल्गायाःद्वेपर्याणस्यद्वेअश्वपालस्य ॥ ३८ ॥

नमात्रेचक्रंत्वरिस्मृतं॥३९॥ लघ्वीत्वाष्ट्रीरथीकालवत्नंत्वंकवर्म
णी॥मेठोमेंडोहस्तिपकेजंघात्राणंतुमंखुण॥४०॥स्यान्नायकाग्रे
सरिकौनासीरंदर्पऊष्मणि॥शस्त्रमायुधमुद्दातःस्याद्वरंतुधनु
र्गुणी॥४१॥शरावापोधनुःस्त्रीस्यात्तूणतात्रिणतापिच॥व्यध्यस्तु
प्रतिकायःस्याज्जीवास्याभारवगुण॥४२॥शस्त्राभ्यासश्चखुर
लीबाणःस्यादस्त्रकंटकः॥स्थूलक्ष्वेडोविपाठश्चत्रिपुंख·शरः
सरः॥४३॥पत्रवाहोविकर्षुःस्यतीरंविज्जलशायकं॥लोहनालस्तु
नाराचःप्रसरःकांडगोचरः॥४४॥ऋष्टिःखड्गस्तरवारिःशस्त्रोभ
द्रात्मजश्चसः॥धाराविषोविशसनोन्युब्जखड्गःकटीतलं॥४५॥
स्यादूनञ्चक्रफलंपर्शुःपरशुरित्यपि॥दीर्घायुधःशलःकुंतःश
ल्यःशंकुर्विषांकुरं॥४६॥श्रीलोःस्त्रीसीसकलंग्नाःमातंगयास्तु
तिव्रतो॥भोगावलीबंदिपाठोवस्तकीटस्तयाचितं॥४७॥वातके
तुःक्षितिकणःस्यात्पांशुर्मेदिनीद्रवःसंभारःसर्वपूर्णस्त्वेपताकाव्यो
ममंजरं॥४८॥कदलीकंदलीचीनमक्षवाठस्तमल्लभूः॥भीरुस्तुभे
लोहरिणहृदयःस्यात्पलंकटः॥४९॥विद्रवस्तस्तृगालीस्यादाघा
तस्तुवधस्थली॥कदनंमारणंमथःसौप्तिकंरात्रिमारणं॥५०॥
निपातोभूमिलाभश्चमृत्युःकरण्यथमारकः॥मरणोमारिरुत्पात

---

अर्जुनरथस्यैकवृद्धस्यतिरथस्यैकंद्वेयानमात्रस्यद्वेचक्रस्य॥३९॥त्रीणि
लघुरथस्यत्रीणिवर्मणःत्रीणिहस्तिपस्यद्वेजंघात्राणस्य॥४०॥द्वेनाय
कस्यत्रीणिदर्पस्यत्रीणिशस्त्रस्यसप्तधनुष॥४१॥षट्धनुर्गुणस्य॥४२॥
द्वेशस्त्राभ्यासस्यनवबाणस्य॥४३॥त्रीणिसायकस्यचत्वारिनाराचस्य४४
सप्तखड्गस्यद्वेन्युब्जखड्गस्य॥४५॥द्वेचक्रफलस्यद्वेपरशौ षट्कुंतस्य
॥४६॥द्वेशूलस्यत्रीणिस्तुतिव्रतस्यद्वेस्तुतिग्रंथस्यद्वेयाचकस्य४७चत्वारि
पांशौ द्वेसंभारस्यपंचपताकाया॥४८॥द्वेमल्लभुव चत्वारिभीरोः॥४९॥द्वे
अपयानस्यद्वेवधस्थल्या त्रीणिमारणस्यद्वेरात्रिमारणस्य५०त्रीणिमृत्योः

शवस्तु क्षितिवर्धनः ॥ ५१ ॥ पंचावस्थः कुदः स्यादगः श्मशानं तु शता
नकं ॥ कुद्राक्रीडोदाहसरः संस्क्रिया सत्क्रिया समे ॥ ५२ ॥ चिताकाष्ठ
मठी चैत्यं चिता चूडकमिष्यते ॥ चितं चाथान्तशय्या यां खट्वा द्विर्वा रुठद्
स्यपि ॥ ५३ ॥ उपग्रहस्तु याद्हः स्याहुंदीकरमरीत्यपी ॥ २५४ ॥ ॥ इति
क्षत्रियवर्गः ॥ ॥ तृष्णा धनपिशाची स्याद्वार्धुष्यं धान्यवर्धनी ॥ ग्रा
मीत्यमृणमर्थानां प्रयोगः स्यात्कलांबिका ॥ ५५ ॥ ऋणमुक्तिर्विग
णनं क्षेत्रं वा रदमुच्यते ॥ दलिर्बृहद्दलं मुद्गो हरिनामा बनाखुकः
॥ ५६ ॥ वासं तश्चाथ मसुरो मसूरो व्रीहिकांचनः ॥ सर्षपः स्यात्सरिष
पः कटुस्नेहाच तंतुभः ॥ ५७ ॥ प्रवेटः शितशूकः स्याद्गोधूमो म्लेच्छ
भोजनः ॥ ताम्रवृन्तः कुलत्थः स्यान्निःस्नेहश्चंडिकातसी ॥ ५८ ॥ मू
र्खः पुरीषमो माषो राजमाषस्तु वर्वटः ॥ फुल्लफालः शूर्पवातेन स्त्री
तितउचालनी ॥ ५९ ॥ केडन्युदूखलं प्रस्थः पालिः सूदः प्रचेलुकः ॥
कुसूलो व्रीह्यगारं स्यात्कंदुरग्निष्ठ उच्यते ॥ ६० ॥ आलिंजरो नानं
दा स्त्री मृत्स्नाभांडकमुष्टिका ॥ वारासनं वाःसदनं कणनो हंडि
कासुतः ॥ ६१ ॥ कलसी गर्गरी तुल्या तस्यात्सरावस्तु मार्तिकः ॥ शा
लाजिरः पार्थिवश्च मृत्कांस्यमथ लोहिका ॥ ६२ ॥ खरसोदः खर
पात्रं शिंघाणं काचभाजनं ॥ काष्ठलोही तु वातर्द्दिजीरको दीप्यकः
स्मृतः ॥ ६३ ॥ कटभंगस्तु शंठी स्यात्कांजिकं तु तुषोदकं ॥ गृहा

---

चत्वारि मारकस्य पंच शवस्य ॥ ५१ चत्वारि श्मशानस्य द्वे संस्कारस्य ५२ पंच चि
तायाः त्रीणि शवरथस्य ५३ चत्वारि वंद्याः ५४ द्वे तृष्णायाः द्वे वार्धुष्यस्य द्वे ऋ
णस्य अर्थप्रयोगस्यैकं ५५ द्वे ऋणमुक्तेः द्वे क्षेत्रस्य द्वे बृहद्दलस्य चत्वारि मु
द्गस्य ५६ चत्वारि मसुरस्य चत्वारि सर्षपस्य ५७ द्वे यवस्य द्वे गोधूमस्य द्वे कुल
त्थस्य त्रीण्यतस्याः ५८ त्रीणि माषस्य द्वे राजमाषस्य द्वे शूर्पवातस्य द्वे चा
लन्याः ५९ द्वे उदूखलस्य चत्वारि पाल्याः द्वे कुसूलस्य द्वे कंदोः ६० द्वे बृहद्
जलाधारस्य द्वे भांडभेदस्य द्वे जलाधारस्य द्वे हंडिकासुतस्य ॥ ६१ ॥ द्वे

मुसिहूसलिलंरसोघ्नं धातुनाशन॥६४॥गृहिणीमधुराहिंगुमूल
हृत्स्रूपधूपनें॥ घर्षणी हेमरागिण्यो हरिद्रा पीतवालुका॥६५॥ श
डोलस्यात्गुड स्वादुःपिष्टटागुडशर्करा॥ महाश्वेतातुमधुजा प्रयू
स्तंस्यात्स्नसंस्कृते॥६६॥चिपिटोधान्यचमसेश्चित्रापूपश्चरूत्रण
॥आलिंपनातर्पणादीपनं मंडोदकंचतत्॥६७॥ वटकःपिष्टपूरे॰
स्याद्भूतोपायनवायने॥प्रहेणकंचाथपोलीपूपालीचर्पटीचसा६८
सक्तुश्चूर्णकेआपूप्योभक्तंकूर प्रसादन॥ मंडोज्येष्ठांबुखदिकु
लाजा पारीतुदोहनी॥६९॥निपानस्त्रीगवीतुंबानिलिंपारोहिणी
चसा॥ गव्यंश्रेष्ठंपुंसवनस्याद्दोहापनप-पुमान्॥७०॥ अवदोहः प
य-क्षीरंश्वाथ्याटंचाघनंदधि॥ कहूरंतुदधिस्नेहोजग्धिर्भोजनभस
णे॥७१॥ देहयात्राविघ्नपनंभुक्तंप्रत्यवसानवत्॥ कल्यवर्तःप्रात
राशःप्रातर्भोजनमित्यपि॥७२॥ अनड्वान्शांकरोगंधमैथुनःश
क्करिर्वृषः॥ ककुद्मान्पुंगवेश्चाथकंठालाजालगोणिका॥७३॥ दो
ग्धाशकृत्करिर्वत्सस्तेषामाटीकनंक्रम॥गवादिकंजीवधनंप
लिक्नी बालगर्भिणी॥७४॥ करकगोमयछत्रे गोग्रंथिःशुष्कगोम
ये॥ करिषश्छगणो हंभारंभणंचगवांध्वनौ॥७५॥ नैचिकंगो शि
रोदेशोवंदनीयातुरोचना॥मंथानमंथतक्राटो स्यादुष्ट्रःकंठकाशन ७६

---

कलस्या-पचशरावस्यत्रीणिलोहपात्रस्य६२ हेकाचपात्रस्यहेकाष्ठलोह्याः
हेजीरकस्य६३ हेशुंठ्याःअष्टकाजिकस्य ६४त्रीणिहिंगुनःचत्वारिहरिद्रायाः
६५त्रीणिगुडस्यहेशर्करायाः हेसितायाः हेतैलसंस्कृतस्य ६६हेचिपिटस्यहे
पूपविशेषस्यहेदृसे हेमंडोदकस्य ६७ हेवटकस्यत्रीणिवायनस्यत्रीणिपो
ल्याः ६८ हेसक्तोःचत्वारिभक्तस्यहेमंडस्यहेलाजानांसप्तदोहन्याः६९च
त्वारिगव्यस्य७० त्रीणिदुग्धस्यएकंअघनदध्न हेदधिस्नेहस्यसप्तभोजन
स्य७१ त्रीणिप्रातर्भोजनस्य ७२सप्तदृषस्यहेकंठालायाः ७३ त्रीणिवत्सस्य
वत्सगतेरेकंगवादिधनस्यैकंहेबालगर्भिण्याः ७४॥ हेगोमयछत्रस्यहेशुष्क

लंबोष्ठाध्वगवासंतकुलनाशमरुद्विपाः॥ भोलिर्बद्धकरो वक्रयी
वो मेषस्तु रोमशः॥७७॥ सेस्फालहुडुमेढ्राश्वमेषीस्याज्जालकि
न्यविः॥ वर्करस्तु लंबकर्णश्छागो बस्तः शिवाप्रियः॥७८॥ अल्पायु
र्लघुकायश्च मेनादः पर्णभोजनः॥ परिक्रमसहो बुक्को देवानांप्रियइ
त्यपि॥७९॥ छागीसजाचुलंपास्याच्छंकुकर्णस्तु गर्दभः॥ स्मरस्मर्य
श्चिरमेही ग्राम्याश्वो रेणुरूषितः॥८०॥ पशुश्रीः शुद्धजं पौरुत्वं चा
रुशिलामणिः॥ स्वाध्यायी पत्तनवणिग्घेडाबुक्कोश्वविक्रयी॥८१
सर्वमूल्यं द्यूतबीजं हिरण्यं च कपर्दकं॥ वराटकः पूर्णास्थि स्याद्भा
सुरः स्फाटिकोपलः॥८२॥ शालिपिष्टं धौतशिलं गल्वर्कश्च सुसा
रवत्॥ अश्मसारस्त्विंद्रनीलो वैदूर्यं बालवायजं॥८३॥ बालसूर्य
मथो रक्तकंदलो विद्रुमश्च सः॥ लतामणिः प्रवालः स्याद्राजपट्टो वि
राटजः॥८४॥ कुरुविल्लः पद्मरागो दधीच्यस्थि तु हीरकं॥ स्वर्णं
लोहवरं चाग्निबीजं चाग्नेयमित्यपि॥८५॥ रूप्यं श्वेतं रंगबीजं मिं
दुकांते मणी चकं॥ ताम्रकं तु लोहिताप्यस्तु सूर्यार्द्धं मुनिपित्तलं॥८६
कंसे तु कांस्येकंसास्थि ताम्रार्धं मध्यमौक्तिकं॥ रसोपलं शुक्तिबीजं
सिंदूरं रक्तबालकं॥८७॥ पारदः सिद्धधातुः स्याद्धरबीजं च सूतकं॥
रंगं स्करे भं मृद्गंकुसुंभं ग्राम्यकुंकुमं॥८८॥ हरिताले तु कबूरं गोदं
तो नटसंज्ञकः॥ दारदे तु हिंगुलः स्याद्धिंगुलं रक्तपारदं॥८९॥

---

गोमयस्य द्वे करीषस्य द्वे गोध्वनेः॥७५ गोः शिरोदेशस्यैकं द्वे रोचनायाः त्रीणि
मंथानस्य दश शोद्रस्य ७६ पंच मेषस्य ७७ त्रीणि मेष्याः द्वादश छागस्य ७८॥७९
त्रीणि छाग्याः अष्ट गर्दभस्य॥८० त्रीणि रत्नस्य द्वे पत्तनवणिजः द्वे अश्वविक्र
यिणः॥८१॥ षट् कपर्दकस्य॥ चत्वारि स्फटिकस्य ८२ द्वे इंद्रनीलस्य त्रीणि वै
दूर्यस्य ८३ चत्वारि विद्रुमस्य द्वे विराटजस्य ८४ द्वे पद्मरागस्य द्वे हीरकस्य
चत्वारि स्वर्णस्य ८५ त्रीणि रूप्यस्य द्वे चंद्रवर्णरूप्यस्य चत्वारि ताम्रस्य चत्वारि कांस्यस्य
त्रीणि मौक्तिकस्य द्वे सिंदूरस्य ८७ चत्वारि पारदस्य त्रीणि रंगस्य द्वे कुसुंभस्य ८८

रसगंधोगंधरसोगंधारंमसिवर्द्धनं॥ क्षारंतुस्याद्यवक्षारोयवश्र
कश्चरेचक ॥९०॥ शिलाजतुशिलान्याधिस्तृफलात्रिफलापिच॥
इतिवैश्यवर्गः॥ ॥शूद्रःस्यात्सादृजोदासोग्रामकूटोमहत्तरः॥मालि
कःपुष्पलावःस्यात्कुंभकारस्तमृत्करः॥९१॥ दंडभृत्यलगडस्तुस
धाजीवीचलेपकः॥कायस्थेकूटकृत्यंजीकरौचित्रकरेस्मृतु॥९२॥
चर्मरुःकुरटःपादुकृत्कलादस्तगौंजिकः॥नाडिंधमःस्वर्णकारो
वात्सीपुत्रस्तनापित॥९३॥ चंदिलोनखकुट्टश्चरजकःकर्मकी
लकः॥कन्यापालःपालवणिग्देवलस्त्वमरद्विजः॥९४॥ अजाजी
वस्तजाबालोनिष्कश्चांडालउच्यते॥कुक्कुरेदीर्घस्करतवातदर
सनालिहः॥९५॥रतव्रणोग्राम्यमृगस्तथैद्रूमदकामुकः॥कपिलो
वक्रपुच्छश्चशपालुररतत्रपः॥९६॥ शुन्याशुन्यश्शुनीरस्याच्चौर
शंकितवर्णकः॥स्यात्कुंभिलश्चप्रचुरपुरुषोथकुजंभिरः॥९७॥सु
रुंगाह्विवधश्चौरेबंदीकालस्तमाचलः॥प्रसह्यचौरश्चिल्लुभः
स्त्रीचोरोरतहिंडकः॥९८॥काव्यचोरश्चंद्रेण कुडयछेदंतुखा
निकं॥ संधिःसुरुंगातद्भेदाःश्रीवत्सगोमुखादयः॥९९॥कपाल
नालिकातर्कुस्तर्कुशानस्तसामकः॥ वर्तनीतर्कपीठीस्यात्पिंज
नंतूलकार्मुकं॥३००॥ तूलःपिचुःपिचुतूलंपिंजिकातूलनासिका॥

---

द्वेहरितालस्यद्वेगोदंतस्यचत्वारिहिंगुलोः८९चत्वारिरसगंधस्यचत्वारियव
क्षारस्य९०द्वेशिलाजतुनःद्वेत्रिफलायास्त्रीणिशूद्रस्यद्वेमहत्तरस्यद्वेमालि
कस्यत्रीणिकुंभकारस्य९१त्रीणिलेपकस्यत्रीणिकायस्थस्यद्वेचित्रकारस्य
९२त्रीणिचर्मकारस्यचत्वारिस्वर्णकारस्यचत्वारिनापितस्य९३द्वेरजकस्य
द्वेकन्यापालस्यद्वेदेवलस्य९४द्वेअजाजीवस्यद्वेचांडालस्यएकादशकुक्कु
रस्य९५॥९६॥त्रीणिशुनीसंघस्यचत्वारिचौरस्यत्रीणिवधचौरस्य९७चत्वारि
सह्यचौरस्यद्वेस्त्रीचौरस्यद्वेकाव्यचौरस्यद्वेसंधेद्वेसंधिभेदयोरेकैक॥९९॥द्वेतर्कोः
द्वेतर्कुशाणस्यद्वेतर्कुपीठ्या द्वेतूलधनु ॥३००॥ त्रीणितूलस्यद्वेपिंजिका॥

तंत्रकाष्टंतुरीस्त्रीस्यात्शीघ्नव्हासेद्रूतूलके॥१॥पन्नधीपादुकाशा
णिद्विलापदरथीत्यपि॥कावारीजंगमकुटीभ्रमकुंत्स्यथखर्परः॥२
वारित्रासूर्धखोलष्ठसेवपत्रपिशाचिका॥वासीतुतक्षणीनस्त्रीत्र
कचःपत्रदारकः॥३॥मद्यंत्वरिष्टंमैरेयंकत्तोयंकापिशायनं॥माध्वी
चमधुमाध्वीकंकुपिशीकाचमालिका॥४॥वीरादेत्याप्रसन्नाचम
धवीगंधमादनी॥गौडीचवाल्कलीमध्वासवयक्षरसौनेरि॥५॥
नालिनीनारिकेपस्यसुरातालस्यतालती॥स्मरासवोमुखसुरं
पारिस्यात्पानभाजनं॥सुंडापानंमदस्थानंघूतकृत्कृष्णकोहले
देवसभ्यस्तुसभिकोलग्नकस्तृणमत्कुणः॥७॥चुंचुरीतितिडी
द्यूतेपंचालीशारिशृंखलो॥अष्टकांगंनयपीठीनयस्तुजतुउत्रकेः
॥८॥ ॥इतिशूद्रवर्गः॥ ॥इतित्रिकांडशेषेद्वितीयःकांडःसमाप्तः

श्रीगणेशायनमः॥ ॥क्षेमंकरोरिष्टतातिःस्यात्भद्रंकरशंकरौआ
मुष्यायणविज्ञातौपुत्रान्नादःकुटीचकः॥१॥स्यपुटंविषमंसंचा
रजीवीशरणार्थकः॥अभिपन्नःशरणार्थीपांडुपृष्ठस्त्वलक्षणः
॥२॥उद्भटोड्डामरोत्तालमाविष्टःप्रेतवाहितः॥प्रेंखोलितस्तरलि
तस्तृषितस्तर्षितःसतृट्॥३॥ऊर्ध्वस्थोर्ध्वंदमौतुल्यौग्राम्योग्रा
मेयकःस्मृतः॥पराचीनंप्रतीपंस्यात्समीचीनंसमंजसम्॥४॥

---

याःद्वेतुर्याःद्वेइंद्रूतूलस्य१चत्वारिपादुकायाःत्रीणितृणादिछत्रस्यचत्वा
रिजलत्रायाः२द्वेतक्षण्याःद्वेकचस्य३पंचदशमद्यस्य४द्वेगौड्याःद्वे
पुष्पमद्यस्य॥५॥नारिकेरसुरायाएकंत्रीणितालसुरायाःद्वेपानभाज
नस्य६द्वेमदस्थानस्यद्वेद्यूतकृतःद्वेदेवसभ्यस्यत्रीणिलग्नकस्य॥७॥
त्रीणिद्यूतस्यद्वेशारिशृंखलायाःद्वेनयपीठ्याःद्वेनयस्य॥३०८॥ ॥
चत्वारिक्षेमंकरस्यद्वेविज्ञातस्यद्वेपुत्रान्नादस्य१विषमसंचारजीविनःएकं
त्रीणिशरणार्थिनःद्वेअलक्षणस्य२त्रीण्युद्भटस्यद्वेप्रेतवाहितस्यद्वेतरलित
स्यत्रीणितृषितस्य३द्वेऊर्ध्वस्थस्यद्वेग्राम्यस्यद्वेप्रतीपस्यद्वेसमीचीनस्य४

स्वस्थानस्थः परान्द्वेष्टि य. सगोष्ठश्च उच्यते॥दातातुदारुर्मुचिर १
स्याद्विदग्धस्तुनागर॥५॥पिङ्गोव्यलीकःषट्प्रज्ञ कामकेलिर्विदू
षक॥पीठकेलि पीठमर्दोभविलक्षितु दुरोविट॥६॥प्रघटाविच्छा
स्त्रगंडोमेधावीमेधिर समौ॥युक्तंपरिमितेभीमंत्वाभीलेश्लु१
थःश्लथः॥७॥शिथिलोवोदआर्द्रःस्याच्चिरस्थोनायकःस्मृत॥
स्यादायःशूलिकतीक्ष्णकर्माशोचोनदंहृति॥८॥कुसृत्याविभक्ता
न्वेषीपार्श्वकःसंधिजीवक॥वाक्याभिधायीपुरुष पृष्ठमांसादउ
च्यते॥९॥भार्याटःस्वस्त्रियोदाताऽन्नार्थदूषकपांसनौ॥धष्णुर्धृ
ष्णग्धृग्धृष्टोदशेरःस्तुमघातक॥१०॥देशक शासिताशास्ता१
शिक्कुरव्यवसायवान्॥चकितःशंकितोभीत प्रतियत्न प्रयत्नवान्
॥११॥आधार्मिकोधार्मिकःस्यात्प्रसृतातरितोसमौ॥कृपणोदृढमु
ष्टिःस्याद्वेनयुर्धार्मिकःसुकृत॥१२॥मनआपोमनोज्ञःस्यात्चक्षु
ष्यःप्रियदर्शन॥लरवंडभद्रकेन्पुरवलडद्दंचारुबंधुर॥१३॥भ
ट्टारोभगवान्पूज्यःशक्तप्रतिबलोसमौ॥पटुःपाटविकोधूर्तःस्थ
गस्तीक्ष्णस्तुराजघे॥१४॥संबंधीगुणवान्संयुङ्मित्रयुर्मित्र
वत्सलः॥धर्मार्थकाममोक्षेषुलोकतत्वार्थपोरपि॥१५॥षट्सु प्र
ज्ञास्तियस्योच्चैःषट्प्रज्ञइतिसःस्मृतः॥ मध्यस्थस्तुनिसृष्टःस्या

---

गोष्ठस्यैकंत्रीणिदातु द्वेविदग्धस्यदशषिङ्गस्य६द्वेशास्त्रगंडस्यद्वेमेधा
विन द्वेयुक्तस्यद्वेभीमस्यद्वेशिथिलस्य७ द्वेआर्द्रस्यद्वेनायकस्यद्वेती१
क्ष्णकर्मण द्वेअनदहृते ८ संधिजीवनस्यैकवाक्याभिधायिनएक९अ
न्नार्थस्वस्त्रीदातुरेकद्वेदूषकस्यचत्वारिधृष्टस्यद्वेसुसघातस्य१०त्रीणि
शासितुःद्वेअव्यवसायिन त्रीणिभीतस्यद्वेप्रयत्न वत॥११॥ द्वेअधार्मि
कस्यद्वेअंतरितस्यद्वेकृपणस्यत्रीणिधार्मिकस्य१२॥ नवप्रियदर्शन१
स्य१३द्वेभट्टारस्यद्वेप्रतिबलस्यचत्वारिधूर्तस्यद्वेतीक्ष्णस्य१४॥त्रीणि१
सबंधिन द्वेमित्रवत्सलस्यधर्मादिप्रुमज्ञावत॥१५॥ द्वेमध्यस्थस्य९

ह्यग्रपृष्ठस्तु संमुखः ॥१६॥ स्यात्कथंकथिकः प्रष्टा विचक्षुर्विमनाः स्मृ
तः ॥ प्रतारितोऽभिसंहितः स्यात्सोऽथ रक्तः प्रथितो मतः ॥१७॥ माशब्दिकः
प्रतिषेद्धा जडमातृसखौ समौ ॥ प्रीणं पुराणं भिन्नं तु व्यवच्छिन्नं विशे
षितं ॥ विनाकृतं विरहितं त्यक्ते निर्व्यूढ उच्यते ॥ तिक्तः कषायः सुरभिः
कक्खटो निर्वहो दृढः ॥१९॥ निःसंधिस्त्वनिवातश्च समूढं शोधितं समे
॥ स्यादागन्तुक आहार्यः समे पक्तिमपाकिमे ॥२०॥ कोमलं पेलवं पापे
त्वधमः पसदः क्रूवाः ॥ रोमांचितो हृष्टरोमा अजानेयास्तु निर्भयाः ॥२१॥
अन्यासाधारणं त्वावेशिकं प्रातिष्ठितं च तत् ॥ भिन्नकः क्षपणो ह्रीको
बौद्धो वैनयिकः स्मृतः ॥२२॥ और्ध्वस्रोतसिकः शैवः कौल आन्वयि
कः स्मृतः ॥ पांचार्थिकः पाशुपतस्त्रिदूपः स्फूर्तिमान्मतः ॥२३॥ प्राज्ञा
उद्घाटितज्ञा स्याच्छुंपुशं बशफर्भयवः ॥ गौरवितास्तु संमिश्रा
श्लाघ्यास्तत्र भवन्मुखाः ॥२४॥ स्याद्देवानांप्रियः क्षेपे हृतको बंधुद
ग्धवत् ॥ अणुः कनीयानल्पिष्ठः पिंडितं गुणितं हितम् ॥२५॥ खट्
वारूढोऽविनीतः स्यान्मरालमसृणे समे ॥ प्रांजलः प्रगुणो जिह्मः प्रा
णाघ्यः साधुनिंदिते ॥२६॥ लत्तड्डिन्नं चान्यतरं दपष्ठुलपमष्टुचौ ॥ करंवितं
खचितं रूषितं गुरुगुंडितं ॥२७॥ सपात्रसमितोऽन्यत्र भोजनान्मि
लितो नयः ॥ ॥इति विशेष्यनिघ्नवर्गः॥ ॥विधिर्विधानं कर्मा स्त्री क्रि

---

द्वे संमुखस्य १६ द्वे पृष्टुः द्वे विमनसः द्वे प्रतारितस्य द्वे प्रथितस्य १७ द्वे प्रतिषे
द्धुः द्वे जडस्य द्वे पुराणस्य पंच विरहितस्य १८ द्वे त्यक्तस्य त्रीणि सुगंधेः पंच
दृढस्य १९ द्वे शोधितस्य द्वे आगंतुकस्य द्वे पक्तिमस्य २० द्वे कोमलस्य चत्वा
रि पापिष्टस्य द्वे रोमांचितस्य त्रीणि निर्भयस्य २१ त्रीणि साधारणस्य पंच
बौद्धस्य २२ द्वे शैवस्य द्वे कौलस्य चत्वारि पाशुपतस्य २३ द्वे अज्ञापाः त्रीणि
शुंभयोः द्वे गौरवितस्य श्लाघ्यस्यैकं २४ क्षेपोक्तेरेकं द्वे बंधुदग्धस्य त्रीण्यणोः
त्रीणि गुणितस्य २५ द्वे अविनीतस्य द्वे मसृणस्य त्रीणि जिह्मस्य त्रीणि सा
धोः २६॥ चत्वारि भिन्नस्य द्वे अपष्ठुलस्य चत्वारि खचितस्य २७ पात्रसमि

याकृत्याविधाकृतिः॥व्याप्यतुसाधनंकर्मयुताजन्येतुसंगतम्॥२८
अंगारितंपलाशानांकलिकोद्गमनेस्मृतं॥जलयंत्रगृहंधीरैःसमुद्रगृ
हमुच्यते॥२९॥जलहंतुविदुःस्वल्पेसमालीकुसुमाकरे॥स्तनाभोगस्त
नभरःपरभागस्तुसंपदि॥३०॥आलिंगनंत्वगपालिःश्लेषास्वद्दिस्त्व
सद्रह॥स्यादधोनेंद्रकेसध्रिःसहभोजनमित्यपि॥३१॥धार्मिकाणां
तुसंभूयभोजनेगणचक्रकं॥क्रीडाक्रीडकयोर्द्वास्यःसेवायासेवके
वसः३२॥दानेदायोथेद्ध्रंतंदुःसमंचासमंजसं॥कलंजौतौविषा
स्त्रेणहतोयोमृगपक्षिणौ॥३३छेदोक्तिर्वक्रभणितंगोमुखंतूपलेप
न॥वार्धायनाम्रयंत्पूर्णपात्रपूर्णालकंचतत्॥३४॥बुहूद्रव्यस्तौपि
केस्यात्सत्वद्रव्यचवस्तुच॥लेशस्तूपपदंगंधोनुबंधेवत्करावपि
॥३५॥खेदःखंडोस्त्रियांगालिःशापनेशमनेशमः॥वप्रस्तुधूलिके
दारःप्सा वीतिर्भक्षणंचसा॥३६॥मैत्रेयिकामित्रयुद्धेपर्यंकस्त्वव
सक्थिका॥अथहेतुरुपादानेप्रत्ययाःसहकारिणः॥३७॥अनुमा
त्वनुमानंस्याद्व्याप्यंलिंगंचसाधनं॥प्रत्यक्षोपाक्षमध्यक्षंधन्यंधां
ध्यमपाटवं॥३८॥बोधोबोधिःसमंतात्तुज्ञानंस्यात्समुदागमः॥
ऋषिशास्त्रकृदाचार्यशास्त्रंतुस्मृतिरागमः॥३९॥सांख्येसमीक्षं
स्याद्दिव्यदोहदंतूपयाचितं॥कारिणोरूपमिच्छंतिकर्णास्फालेज्ञल

---

तस्यैकं षट्कर्मण द्वेसाधनस्यसगतस्यैकं२८ पलाशकलिकोद्गमस्यैकंद्वेज
लयंत्रगृहस्य२९।स्वल्प जलयत्रस्यैक द्वेकुसुमाकरस्य द्वेस्तनभरस्य द्वेसुसं
पदः३० त्रीण्यालिंगनस्यद्वे असद्रहस्य द्वेअधस. द्वेसहभोजनस्य।३१ धा
र्मिकसहभोजनस्यैकं क्रीडाक्रीडकसेवासेवकानामेकं॥३२॥ द्वेदानस्यत्री
णिसमंजस कलजस्यैकं३३ द्वेवक्रभणितस्यद्वेलेपनस्यद्वेवार्धायनास्य
३४॥ द्वेबुहुद्रव्यस्य त्रीणिद्रव्यस्यपंचलेशस्य३५द्वेखंडस्यद्वेगाले द्वेश
मनस्यद्वेक्षेत्रस्यत्रीणिभक्षणस्य३६द्वेमित्रयुद्धस्यद्वेपर्यंकस्यद्वेहेतोर्द्वे
सहकारिणां३७ द्वेअनुमानस्यत्रीणिव्याप्यस्यत्रीणिप्रत्यक्षस्यत्रीणिधधाप

ज्झलो॥४०॥रामेणरावणवधोरामायणमथोच्चयः॥वस्त्रग्रंथिश्च नीवीस्यान्मणितंरतकूजितं॥४१॥श्वभ्रोवपातोहल्लेखस्तर्कोग्वी र्णंतुशीलितं॥एकीयाएकपक्षाःस्युःसहायाःसहभाविनः॥४२॥कु लीराःस्यात्स्यैगविज्ञानपदाराष्ट्रनिवासिनः॥प्रत्यक्षीव्यक्तदृष्टार्थैश्रा थकर्तनतर्कुटे॥४३॥चिरकालंदीर्घरात्रेमामिक्षामस्तुवाजिनं॥त दात्वंप्रमुखंराजुमल्लुउत्सिक्तउद्धतः॥४४॥द्वैधंविवादेआरंभआ दराडंबरार्थकः॥रभसोगमकारित्वेकौमुदीकार्तिकोत्सवे॥४५॥ आवेशाटोपसंरंभाःप्रियावाकूचटुचाटुनी॥प्रतिरूपंप्रतिछंदेसं वेशनरतिक्रिये॥४६॥अभ्यासःखुरलीयोग्यानिर्वर्णनंनिभालनं ॥शालिनीकरणंन्यग्भावनंगंधनसूचने॥४७॥भावःपदार्थोध र्मःस्यात्सत्त्वंतत्त्वंचवस्तुच॥संदर्भस्तुप्रबंधःस्याद्ग्रंथोद्वात्रिंश दक्षरी॥४८॥स्वर्गबंधोमहाकाव्यंमहारूपकनाटके॥अथवा ङ्मयभेदाःस्फेस्थ्रंपूःखंडकथाकथा॥४९॥आख्यायिकापरि कथाकलापकविशेषकैः॥संदानमनिरूढंचप्रकीर्णगुत्सकाः दिचे॥५०॥सर्गोवर्गपरिछेदोद्घाताध्यायांकसंग्रहाः॥उच्छ्वासः

---

द्वेबोधस्यसमंताज्ज्ञानस्यैकंत्रीणिऋषेःत्रीणिशास्त्रस्य॥३९॥द्वेसांख्य स्यद्वेउपयाचितस्यगजकर्णास्फालस्यैकं॥४०॥रामायणस्यैकंत्रीणि नीव्याःद्वेरतकूजितस्य॥४१॥द्वेगर्तस्यद्वेलर्कस्यद्वेशीलितस्य॥चत्वारि सहायानां४२॥द्वेकर्कटशिशोःद्वेराष्ट्रनिवासिनांद्वेसाक्षिणःद्वेतर्कुटस्य ॥४३॥द्वेचिरकालस्यत्रीण्यामिक्षायाःद्वेतदात्वस्यत्रीण्युद्धतस्य॥४४॥द्वे विवादस्यत्रीण्यारंभस्यद्वेरभसस्यद्वेकार्तिकोत्सवस्य॥४५॥त्रीणिसंरं भस्यद्वेप्रियवाचःद्वेप्रतिछंदस्यद्वेरतिक्रियायाः॥४६॥त्रीणिशस्त्राभ्या सस्यद्वेदर्शनस्यद्वेन्यग्भावनस्यद्वेसूचनस्य॥४७॥षट्वस्तुनःद्वेसं दर्भस्यद्वेग्रंथस्य॥४८॥द्वेमहाकाव्यस्यद्वेनाटकस्यपंचवाङ्मयभेदा नामेकैकं॥४९॥द्वेतिलकस्यद्वेदाम्नःद्वेचामरस्य॥५०॥नवकथापरिच्छे

परिवर्तश्चपटलःकांडमस्त्रिया॥५१॥स्थानंप्रकरणपर्वान्हिकंचग्रं
थसंधयः॥५२॥प्रज्ञप्तिःपरिभाषाशैलीसंकेतसमयकाराश्च॥प्रति
वाणिप्रतिवचनंसमुदाचारास्त्वभिप्रायाः॥५३॥ अप्रतिरूपकथ्या
स्यात्संगणिकाछोरणंपरित्यागः॥स्याद्दूर्धनमंतर्हासस्त्रिषु
पिंडमाहारः॥५४॥अवसर्गःप्राकाम्यंस्याछ्छ्यानुमननमित्यपि
च॥आकल्पकउत्कंठाचिंताकर्मण्यथास्त्यानं॥५५॥आक्षेपोऽ
त्योकारःस्वाध्यायःस्यान्निरंतराभ्यासः॥हर्षस्वनःकिलकिल
सदृशःस्पंदनंतुनिस्पंदः॥५६॥अवसानंतुविरामोमध्यमथोम
डलंचक्रं॥स्यादारंभःप्रस्तावनातदामुखमपिज्ञेयं॥५७॥ ॥
॥ ॥इतिसंकीर्णवर्गः॥ ॥ ॥अथनानार्थः॥ ॥ ॥
स्वरकाद्यादिकाद्यंतक्रमान्नानार्थसंग्रहं॥विहायामरकोशोक्त
मकार्षीत्पुरुषोत्तमः॥५८॥शक्रार्कपर्णयोश्चार्कोऽभीकस्तुभ
यकामिनो॥रूपकांतिकयोश्चांकोऽलिमकौभेककोकिलौ५९
अंतिकंनिकटंचुल्लिर्नाट्येचकौचाग्रजांतिका॥अनीकोस्त्री
रणेसैन्येगौर्यमातरिचांबिका॥६०॥स्याद्दश्मंतकमुद्धानेम
ल्लिकाल्छदनेपिच॥आन्हिकंदिननिर्वर्त्यंतत्क्लीबंनित्यकर्मणि
॥६१॥स्यादाब्धुरिलकंहासविशेषेचनखक्षते॥उदर्कएष्यत्का
लीयफलेमदनकंटके॥६२॥स्त्रियामुत्कलिकाहेलोत्कंठासलि
लवीचिषु॥कोशांगेकोशिकोविश्वामित्रगौर्यांचकौशिकी६३
कृष्णत्वेचहिमान्यांचगौरीकाल्योश्चकालिका॥वर्षोपलेस्त्रीऽ
करकाकरकेकरकोस्त्रियां॥६४॥कुसंभेदाडिमेपक्षिभेदेच

---

दानामेकैकंषट्ग्रंथसंधीनामेकैक५१।५२पचसंकेतस्यद्वेप्रतिवचनस्यद्वे
अभिप्रायस्य५३॥अप्रतिरूपकथायाएकंद्वेपरित्यागस्यद्वेअंतर्हासस्यद्वे
आहारस्य५४त्रीणिप्राकाम्यस्यत्रीणिचिंताकर्मण त्रीणिआक्षेपस्य५५द्वे
स्वाध्यायस्यद्वेहर्षस्वनस्यद्वेनि,स्पंदनस्य५६त्रीण्यवसानस्यद्वेचक्रस्यत्रीणि

करकः पुमान्॥ करमध्यांगुलौ च स्यात्कर्णिका थ द्रुमांतरे॥६५॥
ट्टिके धृष्टे च काकः स्यात्कौतुकं मंगलेछयोः॥ भोगेप्यथ स्याः
त्कुलकं श्लोके कार्थपटोलयोः॥६६॥ कुलकौ नाककाकेंदूक॰
आत्मा च सुखं च कं॥ पेचकस्त्री जितौ काकरुको कोलेयकः स्मुनि
॥६७॥ कुलीने चाथ कनकं धुस्तूरे नागकेसरे॥ चंपके किंशुके हेम्नि
कृषकौ फालकर्षकौ॥६८॥ रोमांचे स्युद्गशत्रौ च द्रुमांगे कटकोः
स्त्रियां॥ राजधान्यां नितंबे द्रेर्वलये कटकोऽस्त्रियां॥६९॥ वेणौ ना॰
कार्मुकं चापे गुणवृक्षेपि कूपकः॥ कल्को विभीतके तैलादिशेषे
चाथ कंचुकः॥७०॥ निर्मोके चोलके वारबाणे थ कुशिको मुनौ
शाले किष्कुः प्रकोष्ठेपि व्याख्या श्लोकेपि कारिका॥७१॥ खगे य
मे छद्मविप्रे कंकः सूच्यां च कूर्चिका॥ क्रमुको भद्रमुस्तेपि कोक
श्चक्रे वृके पि च॥७२॥ पुनर्नवा कारवेल्लपर्णाशेषु कठिल्लकः॥ द्व
कवा कूर्मपूरेपि वंशे दैत्ये च कीचकः॥ नीचेपि स्युल्लुको मूर्द्धत्रा
णे नाके च खोलकः॥ चौरे तु रूचखनको गोलको मणिजारजौ
॥७४॥ खगे लग्ने च गोरंकुः संख्याभेदेपि गंडकः॥ शृंग्यां च ग्राम्यु
डे च ग्रामसक्षुरिका स्त्रियां॥७५॥ गोधिको लेखकेपि स्याद्गुद्ध
कः श्लेके निघ्नयोः॥ वेश्या पूष्यो श्च गणिका चषकं सरकेपि च॥७६
ग्रंथिको पार्श्वदैवज्ञौ ग्रंथिपर्णे च नट्टयोः॥ कंठालंकार खद्योत विद्यु
त्सु चिलिमीलिका॥७७॥ चारको भोजके बंधे नाटकांगेपि चूलि
का॥ चित्रकं चित्रके क्लीबं व्याघ्रे रंडे च चित्रकौ॥७८॥ गृहासक्तेप
क्षिमृगे छेको नागरिके त्रिषु॥ कंबोजलकरंकः स्यान्नारिकेल
फलेपि च॥७९॥ जैवात्रकः शशे चंद्रे दीर्घायुषि च सत्रिषु॥ जालि
का वस्त्रभिकूटसत्ले वर्तौ च जालिको॥८०॥ जंघा यामद्विभित्तौ
चरखनित्रे ग्राव दारणे॥ कपित्थे चास्त्रियां टंकः टुंदुका वल्पशोण
कौ॥८१॥ तिलकं चित्रके क्लोम्नि ना तरौ तिलकालके॥ ग्रहद्वारो॰
तंडुको स्त्री समासप्राय वाचि च॥८२॥ तुरुष्कः सिल्हके देशेप्य॰

ण्यंगेत्रितयेत्रिकं॥कूर्णगेस्त्रीतिक्तशाकःखदिरेवरुणद्रुमे॥८३॥दै
त्येनाकर्णधारेचतारकंदृशिभेनना॥द्विकौकाकचक्रवाकौपृश्न्यं
कुदेदलाढकः॥८४॥नरकोनिरयेदैत्येनौवादेस्यान्नियामकः
॥सभ्येगुरौचनवफलिकानवरजस्यपि॥८५॥नालीकोपद्मनार
चौहंद्वेपिपेटकौस्त्रिया॥सौभाग्येपिपताकास्यात्पंकोस्त्रीकर्द
मांहसोः॥८६॥पंचालिकावस्त्रकृतपुत्रिकागीतभेदयोः॥मणि
दोषेशिलाभेदेपुत्रकोलोमहर्षणे॥८७॥पर्यस्त्यामपिपल्यंकः
त्रिपकौमृगनीपयोः॥पुष्पकंकंकणेपिस्यात्पराकोव्रतखड्गयो ८८
चामरेग्रंथभेदेचविस्तारेपिप्रकीर्णकं॥सितछत्राब्जयोःपुंडरीक
पुंसितुदिग्गजे॥८९॥न्यग्रेचकोशकारेचपाकौश्चनशावकौ॥पु
ष्कलकौगंधमृगेकीलकेक्षपणेपिच॥९०॥कपर्दरज्जुराजीववी
जकोशेवराटकः॥तुंसरकौसुरश्रेष्ठेगिरिमेघौबलाहकौ॥९१
पिंजेनासिकताकर्णभूषाकन्याचवालिका॥शिवमल्यांबकःकृ
ष्णेशक्तिभट्टारकःस्मरे॥९२॥भूमिकारचनायांचमूर्त्यंतरपरिग्रहे
॥मधुकावल्लिभेदेचवर्हिचंद्रेचमेचकः॥९३॥हारभेदेमाणव
कोबालेकुपुरुषेवटौ॥मयूरकोःपामार्गेचहंसभेदेपिमल्लिकः॥
९४॥यूतकंवस्त्रभेदेचयौतुकेसंशयेपिच॥यमकंसंयमेशब्दा
लंकारेयमजेत्रिषु॥९५॥याज्ञिकोयाजकेदर्भेविलेशकरुचोपु
मान्॥राकाहृष्टरजःकन्याकलपूर्णेदुपूर्णिमा॥९६॥नीलवस्त्रेः
स्तितारायांलोचकोनिर्मितौत्रिषु॥नगरीशाखयोर्लंकाकरिण्य
मपिबंधकी॥९७॥गुरावनाथेगरुडेजिनेविघ्नेविनायकः॥ग्रूया
कौशिवमल्लातौवंचकौधूर्तफेरवौ॥९८॥वैदेहकोवाणिजकेवै
श्यायामपिशूद्रजे॥वेलस्पाकार्पयोःक्लीबंव्यलीकंत्रिषुनागरे
॥९९॥बाल्हीकंबाल्हिकंधीरहिंगुनोनाम्नदेशयोः॥विपाकःप
रिणामेपितिलकोपिविशेषकः॥१००॥शंकुःकीलकसंख्यास्त्रज
लजंतुषुदृश्यते॥शिम्बुकःशिम्बुमारेपिम्बुकंग्रंथिशिशिपयोः॥१॥

क्लीबेरावणपात्रेनावच्चापिशतपर्विका॥ शल्कश्चूर्णेपिशूकस्तु स्यादनुक्रोशशृंगयोः॥२॥ शिलाटकोविलेपेद्रेशुल्कोयौतुकदानयोः॥ श्वाविद्दुसौचशल्लुक्योमणौखड्गेचसस्यकः॥३॥ शीधौच शीधुपानेचसरकोस्त्र्यथजन्मनि॥ सूतकंपारदेप्यस्त्रीसूचकोखलकुक्कुरौ॥४॥ गुम्मेसंघाटिकाकुट्टिन्यांचगद्येपिह्वारकः॥ वाद्यभेदे हुडुक्कःस्याद्दात्यूहेचमदोत्कटे॥५॥ इतिकांताः॥ इंदुलेखागुडूच्यांचपूःस्त्रखंस्वर्नभश्च्वखं॥ गोमुखंलेपनेवाद्यभांडेसर्पेपिदुर्मुखः॥६॥ त्रिशिखंस्यात्त्रिशूलेपिन्युंखःसान्निमनोरमे॥ नखंशुक्तौकररुहेकूर्मेपंचनखोगजे॥७॥ आद्यौप्रधानेप्रमुखंवैशाखोमंथमासयोः॥ कांडेनाविशिखारथ्याविशाखोभेगुहेपुमान्॥८॥ लेखोदेवेपिपंक्तौस्त्रीशिखाचूडाग्रयोरपि॥ शाखावेदविभागेपिसखामित्रसहाययोः॥९॥ सुमुखस्तार्क्ष्यपुत्रे॥ इतिखांताः॥ चापवर्गस्त्यागमोक्षयोः॥ शरीरोपायप्रधानेष्वंगंपुंभूम्निनीवृति॥१०॥ संबोधनेःगाव्ययंस्यादयोगोविधुरेपिच॥ शपथेप्यभिषंगःस्यादनंगःखेस्मरेपुमान्॥११॥ पूर्णत्वयत्नावाभोगावायोगोव्याघृताववपि॥ जंगमेंगितयोरिंगोनाटयर्द्दहामृगोवृके॥१२॥ फलेपूगस्यचोहेगमुत्सर्गोन्यायदानयोः॥ सामान्येप्युपरागस्तुग्रस्तार्केंद्वोश्चदुर्नये॥१३॥ हस्तच्छेदेतुसस्यानांकदभंगोनृपात्यये॥ कथाप्रसंगोवातूलेविषवैद्येपिवाच्यवत्॥१४॥ देशेकलिंगोधूम्याटेकलिंगंकौटजेफले॥ त्रिषुदक्षेविदग्धेचखड्गोनिस्त्रिंशगंडकौ॥१५॥ स्वर्गेवज्रेचरश्मौचबलीवर्देचगौःपुमान्॥ स्त्रीवाणरोहिणीदृग्दिग्वाग्भूमिष्वप्सुभूम्निच॥१६॥ वैधव्येनृपनाशेच्चछत्रभंगःप्रकीर्तितः॥ अश्वगंधापितुरगीतुंगोपुन्नागसोच्छ्रयौ॥१७॥ दीर्घाध्वगःस्यादुष्ट्रेपि निषंगःसंगतूणयोः॥ नागःश्रेष्टेभसर्पेषुक्लीबंसीसकरंगयोः॥१८॥ वृक्षेस्यात्तुस्त्रिपुन्नागःपतंगःशलभेरवौ॥ काकोदुंबरि

कायांस्त्रीफल्गुस्त्रिषुनिरर्थके॥१९॥पालनेभ्यवहारेचनिर्वेशेपण्य
योषिता॥भोगःसुखेधनेचाहेःशरीरफणयोरपि॥२०॥भगंवैरा
ग्ययोनीच्छाज्ञानैश्वर्येषुचेष्यते॥तरंगभेदयोभंगोभंगासस्ये
शणाव्हये॥२१॥एकदेशांशयोर्भागोभृंगोधूम्याटकेपिच॥भु
जंगोभुजगेपिङ्गेजामदम्न्यतरौभृगू॥२२॥मृगोऽन्विष्टौचमा
र्गस्त्वमासान्वेषणवर्त्मसु॥योगश्चारेपूर्वलाभेसूत्रेविश्रब्धघा
तिनि॥२३॥उपायेसंगतौध्यानौषधसन्नाहयुक्तिषु॥नृत्येरणे
खलेरागेरंगःक्लीबेत्रपुण्यपि॥२४॥रागःक्लेशादिकेरक्तेमात्सर्ये
लोहितादिषु॥चक्रेरथांगंकोकेनारक्तांगोमंगलेपिच॥२५॥व्य
क्तेसारव्योदितेलिंगंस्थाणौशेफशिलक्षणे॥पुंस्त्वादौवरांगंतु
गुडत्वचिगजेपुमान्॥२६॥वल्गुश्छागेपिवेगस्तुमहाकालफ
लेपिच॥जलोत्क्षेपेसमुत्सर्गेशृंगमुत्कर्षचिन्हयोः॥२७॥शार्ङ्गं
धनुर्विष्णुधनुःसंभोगोरतभोगयोः॥ इतिगांताः॥ ओघोः
स्यात्द्रुतनृत्येचकाचिघोकाचनोंदुरू॥२८॥निदाघोस्वेदता
पोचप्रतिघोरोषघातयोः॥परिघोयोगभेदेपिमेघोवारिदमु
स्तयोः॥२९॥महार्घस्तुमहामूल्यपुंसिलावकपक्षिणि॥ पृक्का
यांस्त्रीलघुःक्लीबंशीघ्रेकृष्णागुरुण्यपि॥३०॥ इतिघांताः॥
प्रतिमापूजयोरर्चाक्रौंचःपक्ष्यद्रिभेदयोः॥कूर्चमस्त्रीभ्रुवोर्म
ध्येश्मश्रुकैतवयोरपि॥३१॥इभ्यांस्त्रीगुरुपुत्रेनाकेशेशुष्कव्रणे
कचः॥देशभेदेपिकांचीस्यादर्थस्थासकतर्कयोः॥३२॥चर्चि
कायांचचर्चास्यात्त्वक्स्त्रीचर्मशुडत्वचोः॥वामनेपामरेनीचो
नमुचिर्दितिजेस्मरे॥३३॥मरीचिर्मुनिभेदेपिचौरवन्दीमलिम्लु
चौ॥कक्कोलेपिचमारीचोमोचाशाल्मरिरंभयोः॥३४॥कुक्कुरे
रतनारीचःशीत्कारेवरयोषिता॥केतुग्रहेतुविकचोवीचिःस्व
स्वतरंगयोः॥३५॥स्वल्पेपिसारिकायांचवचाग्रीष्मानलौशुची॥
सूचीनृत्यप्रभेदेचव्यधनीशिखयोरपि॥३६॥ इतिचांताः॥

वाराहीचीरका कण्ठाकण्ठो नृपेद्रुमांतरे॥पिच्छास्त्रीभक्तमंडे पिच्छोगूले पिच्छम स्त्रियां॥३७॥ इतिच्छांताः॥पद्मधन्वंतरीचाब्जा वंडजः खगमीनयोः॥निचुलेप्यंबुजोऽजस्तु ब्रह्मविष्णुस्मरेष्वपि॥३८॥स्यादंगजः स्मरे केशे पुत्रेरक्तेनपुंसके॥उत्सा हकार्तिकावूर्जौ केभोजो देशशंखयोः॥३९॥ नखे करंजेकरजः कुब्जोन्युब्जो द्रुमांतरे॥खनौ सुरागृहे गंजा गुंजेपटहकृष्णले ॥४०॥ जघन्यजोऽनुजे शूद्रे जलजं शंखपद्मयोः॥ चिन्हकेतौ पताकासु खट्वांगे पिध्वजोस्त्रियां॥४१॥ नीरजं कमले कुष्टे पिंजा हिंसाहरिद्रयोः॥भरद्वाजो गुरोः पुत्रे व्याघ्राटारन्ये च पक्षिणि॥४२ बुधैः ख्यातो भरद्वाजो द्रोणाचार्ये मुनावपि॥भृंगराजः खगौ षध्यो र्लंघने मुनि भेषजं॥४३॥ अगस्त्ये च हरीतक्यां रुजा स्याद्रोग भंगयोः॥गुल्मेपि वनजो बीजं रेतस्तत्वार्थहेतुषु॥४४॥ व्याजः शाठ्येपदेशे च स्वेदरक्तात्मजाः स्वजाः॥ निसर्गे सहजः पुंसि सहोत्थे वाच्यलिंगकः॥४५॥ सन्नद्ध संभृतौ सज्जौ हिमजा पार्वती शची॥ इतिजांताः॥ अज्ञास्त्रिषु जडे मूर्खे कृतज्ञः कुक्कुरेपि च॥४६॥ संज्ञा सूर्यप्रियायां च सर्वज्ञः शंकरे जिने॥इतिञांताः॥ अरिष्टं सूतिकागारे तक्रेपि च पुमांस्त्वयं॥४७॥ काके निंबे च लशुने गर्ते कूपे खले वटः॥ अत्यर्थे क्षोमयोरट्टः कृताविष्टप्रिये त्रिषु॥४८॥ केशटः शेणके विष्णौ कपीटमुदरे जले॥पुंश्चले कुंडकीटः स्याज्जाराच्च ब्राह्मणीसुते॥४९॥ सपथेन्वक्रियाकारे क्लिलिंजशरयोः कटः॥ कोटिः संख्यापि करटो वाद्यभांड कुविप्रयोः॥५०॥ कुलिरे कर्कटो राशौ कृष्टिः कर्षे बुधे पुमान्॥अप्रियेपि कटुः कुंभे कुटो नाभवने हयोः॥५१॥ सुरायां स्त्री कीकटस्तु निस्वे देशे मितंपचे॥खेटः सिंघाणके हीने गृष्टिर्वन्योषधीभिदोः ॥५२॥ सूकरे पुंसि घृष्टिः स्यात्स्पर्धा घर्षणयोस्त्रियां॥ घोटा तु बदरे पूगे देहाशे वर्णने चटुः॥५३॥ निःश्वासो दृशनोच्छिष्ट श्वं

वेदेतद्भिदेपिच॥परिमाणमुदेर्दिष्टिर्दिष्टःकालोपदिष्टयो ॥५४॥
धाराटौचातकह्ययौकपाटेपिचनिष्कुटः॥कोटरेप्यथपट्टःस्यात्
फलकेनृपशासने॥५५॥प्रत्याख्यातेप्रेषितेच प्रतिशिष्टं त्रिलिंग
क॥कर्पटीप्लक्षवृक्षेचपूगादेश्चनवेफले॥५६॥वटीत्रिषुगुणेपुं
सिन्यग्रोधेचकपर्दके॥ वर्वट्यौब्रीहिभिद्वेष्योनटौभरतकासु॰
कौ॥५७॥मोरटंगोर्नवेक्षीरे॰कोटपुष्पेक्षुमूलयोः॥स्लिष्टंम्ला
नेकुवचनेमर्कटीशूकशिंन्यपि॥५८॥लाटोंशूकेचदेशेचव्यष्टं
कल्पेत्रिभूषिते॥पथ्यिवास्तुनिवाटःस्याद्विकटंविकृतंबृहत्॥
॥५९॥ वकेराटःकटाक्षेचस्त्रीणांस्तननखक्षते॥भद्रप्रेरणयो
र्विष्टिर्वर्णाटौकामिगायनौ॥६०॥विटो॰द्रोलवणेपिड्गे मूषिके
खदिरेपिच॥प्रांचल्लोदेस्रुतिकटःप्रायश्चित्तभुजंगयो॥६१॥स्फु
टिःस्फोटेचकर्कट्यां हृष्टःप्रतिहतेपिच॥ इतिटांताः॥वैश्या
द्विजन्मजेवष्ठःपाठायूथिकयोःस्त्रियां॥६२॥काष्ठाकालेपि
कोष्ठस्तुस्वकीयेप्यथसुध्वनौ॥ग्रीवादेशेपिकंठःस्यात्कुष्ठं॰
रोगेौषधीभिदोः॥६३॥ शत्यूहेकालकंठःस्याच्छिवखंजनयोर
पि॥ज्येष्ठोमासिचवृद्धेचज्येष्ठाचगृहगोधिका॥६४॥अम्ल॰
लोण्यादंतशठानाजंबीरकपित्थयो॰॥प्रकोष्ठोबाहुगेहांसे
वरिष्ठंमारिचेपिच॥६५॥ताम्रेचारुतरेचाथमध्यस्थखलयोः
शठः॥शोठो॰लसेचमूर्खेचसूत्रकंठोद्विजन्मनि॥६६॥क
पोतविहगेपिस्यात्स्त्र्यांचप्रसभेहठः॥इतिठांताः॥आण्यंग
कोशयोरंडंकुष्मांडौफलभिद्गणो॥६७॥कुंडंखातोखयोर्जार
जेनाकुंडीकमंडलो॥सिंहात्कोस्त्रीविषक्ष्वेडःपशोक्रोडोननने
रसि॥६८॥खंडो॰स्त्रीशकलेनेक्षुविकारमणिदोषयोः॥गंडः
कपोलेपिटकेश्रेष्ठगंडकयोःसुमान्॥६९॥चंडौषधि.खरश्चंडो
दंडौसैन्यार्कपार्श्वगो॥व्यथाक्ष्माचपीडेद्वेपांडुःकुंतीपतौसिते
॥७०॥पिंडःसांद्रेगृहांशेगेपंडःषंडेमतोस्त्रियां॥स्तंबेशस्तेप्र

 श्री खरतरगच्छीय ज्ञान मन्दिर, जय

कांडोस्त्री वरंडो वदनामये ॥७१॥ समूहे चांतरावेद्यां मंडः स्यात्ता
ऽपिच्छयोः ॥ एरंडे मस्तनिक्षीबे मार्तंडो खगदंष्ट्रिणो ॥७२॥ चाडौदे
ऽसांतरे मुंडो मुर्ध्नि स्त्री मुंडिते त्रिषु ॥ रंडा स्याद्विधवोपध्योर्वितंडा
शाकभिद्यपि ॥७३॥ शिखंडौ तु शिखाबर्हौ शुंडा करिकरः सुरा ॥ ॥
इति डांताः ॥ आषाढो व्रतिनां दंडे मासे मलयपर्वते ॥७४॥ विवेष्ट
वाल्हिशौ मूढौ राढा स्याद्दीप्तिदेशयोः ॥ षंड कंचुकिनौ षंढौ समूढः
पुंजिते नवे ॥७५॥ भुग्ने तु पप्लुते च्यैपवाच्यलिंगे उदीर्यते ॥ इति ढांताः
॥ अरुणो भास्करे नूरौ मंजिष्ठा तिविषा रुणा ॥७६॥ त्रिष्वारक्ते
व्याकुलेऽथ स्थूले मैत्रीह्यंतरे व्यणुः ॥ कीलभाग्याश्रिसीमासु स्या
दापि वदणि द्वयोः ॥७७॥ अभीक्ष्णं तु भृशे नित्ये स्यादिंद्राणींद्रयो
षिति ॥ स्त्रीबंधे सिंधुवारे च चक्षुर्दर्शनमीक्षणं ॥७८॥ उन्मूलने प्यु
द्धरणमुष्णं दक्षेपि ना तपे ॥ स्यात्साधने गीतनृत्यभेदे कायस्य
कर्मणि ॥७९॥ करणं पुंसि संकीर्णे कल्याणं कांचने शुभे ॥ कृष्णो
वर्णे हरौ व्यासे कृष्णं मरिचलोहयोः ॥८०॥ पिप्पलीद्रौपदी कृष्णा
हस्तसूत्रेपि कंकणं ॥ श्रुतिराधेययोः कर्णः पिप्पल्यां जीरके क
णा ॥८१॥ कोणोऽश्रौ वाद्यलगुडे वधे हेतौ च कारणं ॥ ग्रहणं
स्त्रीकृतौ हस्ते गुणः स्याद्रज्जुसूदयोः ॥८२॥ अंगुष्ठानामिकोन्मा
ने गोकर्णः ह्रौ मृगेपि च ॥ नासिकाऽत्रातयोर्घ्राणं चूर्णं गंधयुता
वपि ॥८३॥ वेदांशे वक्रचादौ च ब्रध्नपादेपि चा स्त्रियां ॥ चरण
श्चीर्णपर्णः स्त्रः खर्जूरपिचुमंदयोः ॥८४॥ जैत्रतरींद्रे र्जुने जिष्णुर्द्रू
णिः कठिनदूनयोः ॥ तकृपाः कुन्जपुष्पे पि त्राणां रक्षितरक्षयोः
॥८५॥ दुर्वर्णो रजते पिस्यात् द्रौणो ऽलिः कच्छपी द्रुणी ॥ द्युमणौ
तरणिः पुंसि कुमारीनौकयोः स्त्रियां ॥८६॥ काष्ठागारे तु बाह्लिन्यां
शैलसंधौ च योषिति ॥ द्रोणी न स्त्री मानभेदे द्रोणः काकेकृपीपतौ
॥८७॥ दक्षिणा दिशि दाने च दक्षिणः सरलेपि च ॥ असती स्या
दूर्षणी च धर्षणा निकृतौ रते ॥८८॥ तुष्ठू मंत्रे नाडिकायां धार

ण्यथच मज्जने॥ निर्वाणं निर्वृतौ मोक्षे प्रघाणोऽस्त्रगृहांशयोः॥
॥८९॥ बोले वाते बले प्राणः पूर्णे पुंभूम्नि चासुषु॥ पर्णं पक्षे च पत्रे
च प्रोक्षणं सेचने बधे॥९०॥ ग्रंथे कार्षापणे चास्त्री पुराणमनवे
त्रिषु॥ पार्ष्णिः पादे व्यूहपृष्ठे वाणी व्यूतिश्च भारती॥९१॥ मंत्राख्य
वेदे विप्रौघे क्लीबनाब्राह्मणो द्विजे॥ लिंगाग्रे लिंजरे मौक्तिका दौ
स्त्रीपुंसयो मणिः॥९२॥ अजागलस्तने चापि मसृणो मृदुकर्कशे
॥ निश्मश्रुपुरुषो हृष्टो मत्कुणाव थरोहिणी॥९३॥ नक्षत्रे रोहिता
यां चरणः कणन पृङ्खयोः॥ लक्ष्मणा सारसी दाशरथिः श्रीमांश्च
लक्ष्मण॥९४॥ छागे पिलं बकर्णः स्याद्वेणुर्वंशे नृपांतरे॥ बा
णा झिंटयां शरे बाणे वृष्णिर्यादवमेषयोः॥९५॥ कर्णे श्रुतौ च श्रव
णं शरणं मारणेपि च॥ श्रोणिः प्रक्षे सकपात्रे न क्लीबं कारुसंहतौ॥९६
कषे मारव चतुष्के च शाणः शोणो नदे रुगे॥ पक्वे श्राणं यवागूं
स्त्री श्रीपर्णी गणिकारिका॥९७॥ पद्मे च श्रमणा भिक्षुक्यां मुंडी
र्यां च हश्यते॥ सुवर्णमानभेदेपि स्थूणा शूर्मी च दारुच॥९८॥ स्था
णुः शंकुशिवौ विष्णौ सुषेणः करमर्दके॥ कपिवैद्ये चाथ हृतौ हरणं
यौतकेपि च॥९९॥ इति णांताः॥ मोक्षः स्कधायज्ञशेषो याचि
ते वारिचामृते॥ अमृता तु गुडूच्यां स्याद्धरीतक्यामलक्यपि॥
॥२००॥ शेषे विष्णावनंतो ना गुडूची दूर्वयोः स्त्रियां॥ क्लीबं खे त्रिश्च
न वधावस्मंतं मरणे ऽशुभे॥१॥ चुल्यां च पूर्णिमाभेदे ऽनुमतिः सम
तावपि॥ स्वरूपे तं विनाशे नानस्त्री शेषे तिके त्रिषु॥२॥ गते ज्ञाते
प्य वसित मर्वता वश्वकुत्सितौ अर्वती कुंभदास्यां चाथार्दितं प्रा
र्थिते हते॥३॥ सिंहाद्रिभेद्ध्यो रस्तः स्याल्लाजेष्वपि चाक्षतं॥ कृषा
वसत्येप्यनृत माकृतिर्जातिरूपयोः॥४॥ आसीलब्धहितौ दैघ्र्ये
भाविकाले पि चायतिः॥ आचितः शाकटो न्मेयेप्याबर्तश्चिंतने
पि च॥५॥ आयस्तस्तेजिते क्षिप्ते ऽथारब्धा त्ततिहिंसापित्ते॥ भ्रंशे
तदालेचा पात आहतं गुणिते हते॥६॥ मृषोक्ते चाथ दग्धे स्या

दूषितंस्थितवत्यपि॥व्यसनार्तैचोपरक्तुःउदितंप्रोक्तउद्गते॥
७॥स्याद्धुस्तूरेपिचोन्मतःक्षिप्तेमृष्टेपिचोद्धृतं॥उत्तप्तंशुष्कमांसे
पिवन्ह्युत्पातेप्युपाहितः॥८॥उदास्थितस्त्वरेद्वास्थेस्याद्वृतिः
स्मृतिरक्षयोः॥ऋतमुंछशिलेसत्येएतावागतकर्बुरौ॥९॥ऐरा
वतोनागरंग्यथकीर्तिर्द्युतीछयोः॥किरातौम्लेंछभूनिंबौका
तस्क्रप्रियरम्ययोः॥१०॥केतुर्ग्रहोत्पातचिन्हेकलितंविदिता
त्मयोः॥कपोतःपक्षिमात्रेपिगुप्तेरक्षितगूढयोः॥११॥गतिर्यात्रा
दशोपायाश्वोढःसूर्यश्चगोपतिः॥गृहीसत्रीगृहपतिर्गीतंशब्दि
तगानयोः॥१२॥गर्जितंस्तनितेनेभेग्रस्तंवाभ्भेदभुक्तयोः॥चर्म
ण्वत्यांनदीरंभेजातंव्यक्तौघजन्मसु॥१३॥सूर्यावर्तेपिजामा
त्रानावार्तेपिष्टपेजगत्॥जातिश्छंदसिमालत्यांचुल्यांजातीफ
लेकुले॥१४॥व्यात्तविस्तृतवाद्येषुततंतिक्तंसुगंध्यपि॥चापे
तूणत्वेतूपालातात्तःपित्रनुकंपयोः॥१५॥दुर्गतिर्नरकेनैःस्व्ये
दुर्जातंव्यसनेपिच॥दिवाभीतउलूकेस्यात्कुंभिलेकुमुदाकरे॥
॥१६॥विसृष्टेरक्षितेदत्तंद्रुतंशीघ्रविलीनयोः॥दशनेशैलशृंगेच
दंतःस्याद्दोषधौस्त्रियां॥१७॥दितीखंडनदैत्यांबेधृतिस्तुष्टे
क्रतावपि॥राशौचधातुनिर्वाणसुस्थितत्वेचनिर्वृतिः॥१८॥
अस्वाध्यायेकुरूपेचप्रत्यक्तौस्त्रीनिराकृतिः॥जंब्वांस्त्रीनान
दीकांतःसिंधुवारेजलाब्धिषु॥१९॥निमित्तंहेतुचिन्हांगंतुदेवा
देशपर्वसु॥प्रसृतःकुंचितेपाणौजंघायांस्त्रीगतेत्रिषु॥२०॥
प्रकृतिर्गुणसाम्येस्यात्स्वभावामात्ययोरपि॥प्रतीकारेप्रतिकृ
तिःप्रतिबिंबेथपद्धतिः॥२१॥पंक्तौमार्गेपिपूतंतुपवित्रेबहुली
कृते॥श्रेणिर्दशचपंक्तिःस्यात्प्रसूतिर्जन्मतोकयोः॥२२॥प्रति
पत्तिश्चित्यवृत्तिःप्राप्तिःप्रागल्भ्यगौरवे॥पारावतीगोपगीति
लवलीफलयोरपि॥२३॥पलितंकर्दमेपिस्याद्विधौभूपे प्र
जापतिः॥शक्तेनिवारणेतृप्तौपर्याप्तंस्याद्यथेप्सिते॥२४॥

प्रेतौमृतेप्राणिभेदेपित्सन्न्यातेन्तुपक्षिणोः॥क्लीबंबिंदौपृषन्नेणे
पृषतोऽनयोर्नरि॥२५॥खातादौपुरितेपूर्तपातौश्लेशेचरक्षिते
॥प्रेषितेपिप्रतिक्षिप्तंप्रतीतःसादरेपिच॥२६॥प्लुतःस्वरेचाभियुक्त
द्रेतौचप्रार्थितौसमौ॥हृष्टेपिचप्रतिहतःपीडितंगुणितेघने२७
ग्रासेज्ञातेपरिगतंप्रपातौभृगुनिर्झरौ॥लोकायतेकछ्पेचपेच
गुप्तःस्मृतोबुधैः॥२८॥लब्धेसमंजसेप्राप्तंपक्तिर्गौरवपाकयोः
॥पारिजातोदेवतरौमंदारेपारिजातके॥२९॥वृत्तिवार्ताप्रवाहेषु
प्रवृत्तिरथघोटके॥पानेचपीतिःसिक्तेतुप्रोक्षितंनिहतेपिच३०
रामानुजेनाट्यशास्त्रेदौःष्यतौभारतौनटे॥जिनेपूज्येचभग
वान्भोगवान्नाट्यनागयोः॥३१॥सेवाविभागयोर्भक्तिर्भवा
न्युष्मत्सदर्थयोः॥पक्षिण्यांवाचिवृत्तौचभारतीभारतेपुनः३२
जंबुद्वीपेव्यासकृतौभृतिर्भरणमूल्ययोः॥कुड्यभेदनयोर्भि
त्तिर्भास्वंतौसूर्यभास्वरौ॥३३॥पृथिवीजैनीगावोब्रह्मण्याद्या
श्चमातरः॥मूर्द्धाभिषिक्तोमात्येपिनृक्तौनिर्वृतमोचितौ॥३४॥
मूर्तस्यात्त्रिषुमूर्छालेकठिनेमूर्तिमत्यपि॥मतिरिच्छाऽप्यवय
तिःपाठच्छेदेमुनौपुमान्॥३५॥न्याययोजनयोर्युक्तिःपाद्यश्चि
यादसांप्रती॥रेवतीहलिपत्न्यांभेस्मरपत्न्यांतुरेवतिः॥३६॥
रिक्तंवनेपिरीतिस्तुलोहकिट्टारकूटयोः॥रोहितमृजुशक्रा
स्त्रेरक्तेनामृगमीनयोः॥३७॥शैलभेदेसुवर्णालौशंकरेपिचरैव
तः॥स्वर्णाभ्यक्तेपिरसितंकस्तूरीपृक्कपोर्लता॥३८॥वर्तुला
धीतयोर्वृत्तंवार्तंकुशलनीरुजोः॥वासेपिवसतिर्वृक्षमात्रेपिच
वनस्पतिः॥३९॥वर्तनेत्रि तौवृत्तिर्वर्त्तिर्दीपदशास्वपि॥ला
भेसंबंधयोर्व्याप्तिर्विस्रस्ताविधवापिच॥४०॥छेदेविनाशे
विच्छित्तिर्विगतौवीतनिष्प्रभौ॥असाराश्वेभयोर्वीतंवीतंगं
कुशकर्मणि॥४१॥अभ्युद्यतेविकसितेचेष्टितेचविजृंभितं॥वि
कृतौरोगिबीभत्सौविसंख्यातेधनेपिच॥४२॥दृढेपिव्यापृतं

शुक्तिर्मुक्तास्फोटाश्वलक्ष्मणोः॥ अस्त्रभेदेपि शक्तिः स्याच्छांतिः स्यान्मंगलेशमे॥४३॥ वेतसेपिच शीतोनाशुक्तंपूतांम्लनिष्ठुरं॥ शितिर्भूर्जे सितकृष्णोश्रीमत्तौतिलकेश्वरौ॥४४॥ ब्रह्मशक्तौ शतधृतीवार्ताधां श्रवणेश्रुतिः॥ दुर्बलेनिशितेस्यातां शितशातावथोवचः॥४५॥ सरस्वतीसरिज्ज्ञोश्वसूतोवंदिनिपारदे॥ स्मृतिः स्याद्धर्मशास्त्रेपि प्रवादेपिचसंस्मृतिः॥४६॥ रणेसभायांसमितिस्तिमितौक्लिन्ननिश्चलौ॥ स्थपतिः कंचुकीकारुभेदेगीष्पतिजागकृत्॥४७॥ संबंधेपिचसंवित्तिर्मर्यादायामपि स्थितिः॥ सीतालांगलरेखास्याद्व्योमगंगाचजानकी॥४८॥ सूनृतंकुशलेसत्येसुदोह्यागौश्वसुव्रता॥ शर्करापि सिताश्योधेसख्रतिज्ञेपिचस्थिलः॥४९॥ सतीकात्यायनीसाध्व्योः संघातोनरकेचचये॥ हरीतकी हैमवती गौरीशुक्लवचावपि॥५०॥ स्त्रीहरिद्रुशिववर्णेनादूर्वापिहरितामता॥ इतितांताः॥ आतिथिः कुशपुत्रेपिहरीतक्यपिचान्यथा॥५१॥ अपेक्षाः लंबनंचास्थास्यादर्थोविषयेपिच॥ भटेपुंस्यप्रतिरथंयात्रामंगलसाम्निच॥५२॥ उन्माथः कूटयंत्रेपि कुथः कंबलबर्हिषोः॥ काशेसुतेचस्वश्रुग्रंथोद्वात्रिंशदक्षरी॥५३॥ धनंचग्रंथनाचापितीर्थंतूपायपोगयोः॥ कर्टंश पोणयोःप्रोथौवीथी पंक्तौगृहांशके॥५४॥ वानप्रस्थोमधूकेपिस्यात्तृतीयेपिचाश्रमे॥ काकोल्यामलकीब्राह्मीवयस्थ्यातरुणेत्रिषु॥ सूर्पमंथानयोर्मंथः सांतरेप्यथमन्मथः॥ कपित्थेकामदेवेपिरथः पौरुषदेहयोः५६॥ पुंसिस्त्रियांचपद्धुथः करंजवचयोःक्रमात्॥ सिद्धार्थः सर्षपेवृद्धेसंस्थास्थितिविनाशयोः॥५७॥ संस्थासमाप्तिक्रतुषुवरूथोनिजराष्ट्रकः॥ सिक्थोभक्तपुलाकेनामधूच्छिष्टेनपुंसके५८ इतिथांताः॥ अष्टापदंशारिफलेसुवर्णेस्त्रीपशौपुमान्॥ यामनेभ्यांस्त्रियांपांक्तौबंकेयूरेनांगदःकपौ॥५९॥ अर्बुदोरुजिसंख्या

यामामोदोगंधहर्षयोः॥रहस्येस्यादुपनिषत्समीपसदनेपिच
॥६०॥कंदोस्त्रीशूरणेमूलेराजलिंगविषाणयोः॥स्त्रीककुत्क
टुकेदस्त्रशृंगवेररसोनयोः॥६१॥स्त्रीगंभार्यांक्लीबमब्जेदिङ्ना
गकुमुदःकपौ॥पुष्पेक्लीबंभ्रमौकुंदःक्षोदोरजसिपेषणे ६२ शिव
जूटेवराटेपिकपर्दोथामयेगदः॥विष्णोर्भ्रातरिचास्त्रेस्त्रीपला
शेगरुतिछदः॥६३॥देशेजनेजनपदोनिषादोश्वपचस्वरौ॥वा
क्येशब्देप्रदेशेपिपदंपादस्तनहूयोः॥६४॥मूलेप्रत्यंतशैलेचप्र
सादस्त्वनुरोधने॥स्वच्छकाव्यगुणेचाथप्रतिपत्तिथिसंविदोः६५
विप्रुड्ज्ञाताचबिंदुस्यान्मंदौस्वैरशनैश्चरौ॥हस्तिभेदश्चाथम
दःस्यात्कस्तूरीमदानयोः॥६६॥गर्वेशुक्रेथमाकंद्यामलक्यांना
म्रपादपेमर्यादाधारणासीम्नोर्महानादोगजेपिच॥मेनादस्तु
त्रयश्छागमार्जारकशिखंडिनः॥विशदःपांडरेव्यक्तेशारदो
जलदेपिच॥६७॥स्त्रियांचशारदीतोयपिप्पलीसप्तपर्णयोः
॥संवित्संकेतकेपिस्यात्समर्यादोंतिकेस्थिरे॥६९॥व्यंजनेसूप
कारेचसूदःसूपवदिष्यते॥घर्मस्वेदनयोःस्वेदःसंपल्लक्ष्म्यांस
मुच्चये॥७०॥इतिदांताः॥ खंडेनासमभागेर्धमवधिःसीमकाल
योः॥आविद्धंप्रहतंवक्रमानद्धंवाद्यबद्धयोः॥७१॥अलंकारेपि
चाबद्धःप्रत्याशाव्याधिरुच्यते॥कुटुंबव्यापृतेधर्मचिंतायांच
विशेषणे॥७२॥उपाधिरुग्रगंधेतुवचासेत्रयमानिकेउपलब्धि
र्मतिप्राप्त्योर्वृद्धिःसंपद्विरोषधे॥७३॥राहौशिरःशून्यकायेक
बंधःक्लीबमंबुनि॥गोधातलेनिहाकायांगंधोगर्वेबलेपिच॥
७४॥दोग्धागोपकवौचस्याद्दुग्धंक्षीरेप्रपूरिते॥दिग्धंलिप्तेविषा
क्तेचदुर्विधोखलदुर्गतौ॥७५॥रोधोनिरोधेनाशेचबुद्धोज्ञाते
जिनेबुधे॥निषेधशुद्धयोर्बाधोरौहिणेयकवौबुधः॥७६॥दैत्य
चैत्रवसंतेषुद्रुममभेदेचनामधुः॥सिद्धंचिताभिसंक्षेपनिद्रायांच
श्चमागधी॥७७॥पिप्पल्यायूथिकायांनारुग्नेमगधजेत्रिषु॥

लशुनेऽतिविषायांचशुंठ्यामपिमहौषधं॥७८॥सीतायोजनगं
धास्यात्कस्तूरीव्याससूरपि॥विधिर्ब्रह्मणिकालेचप्रकारेवेध
नेविधा॥७९॥पृक्कामहिलाचवधूर्विश्वस्तोनुद्गरश्चविश्रब्धः
॥ विश्रब्धंवाढार्थेशुद्धंत्रिषुपूतकेवलयोः॥८०॥श्राद्धंनिवापे
श्रद्धालौत्रिषुसाधुर्धनिन्यपि॥ स्कंधःसंघेपिसिद्धस्तुनित्य
निष्पंन्नादिषु॥८१॥संधिःपुमान्सुरुंगायांभेदेसंघट्टनेभगे॥
दूतिधींताः॥कुलेरव्यातेचाभिजनःस्याद्ध्वाकालवर्त्मनोः
॥८२॥दूतिदूसेवदान्नंस्यात्कर्मखंडनयोरपि॥अग्रजन्मा
ग्रजेविप्रेस्याद्दक्तंभक्तमुक्तयोः॥८३॥विनीतेविप्रभेदेचानूषा
नोऽर्थीविवाद्यपि॥अंतावसायीचांडालेमुनिभेदेचनापिते ८४
अश्वकुत्सितयोरर्वावज्रेविद्युतिचाशनिः॥वर्णमात्रेविसर्गेचा
भिनिष्ठानोऽहृद्ये॥८५॥पार्थेद्रुमेमयूरेनाअर्जुनस्त्रिषुपां
डुरे॥अर्जुनीगव्युषायांचभृंगवृश्चिकयोरली॥८६॥आत्माम
नोष्याकृत्स्नंविबंधपरिसंख्ययोः॥आवेशनंशिल्पगेहेभूता
वेशःश्यगेंदुके॥८७॥विशेषेचोपधानंस्यात्तल्पुत्स्यांमुत्सूनमुद्र
मे॥अगंभीरेपिचोत्तानःशराभ्यासेप्युपासनं॥८८॥स्यात्का
त्यायन्यर्धवृद्धागेयोर्वरक्तचीनरि॥शिरीषाम्रातकाश्वत्थग
र्दभांडेकपीतनः॥८९॥चीरेपिकौपीनमश्वेपुन्नागेपिचकेसरी
॥कुलीनत्वेचगुह्येचकौलीनमथकंचुकी॥९०॥स्यापयवर्मि
तेसर्पेकृतोच्छेदेचकल्पनं॥कामिनौस्त्रैणचक्रौचकृतिनौ
योग्यपंडितौ॥९१॥कांचनंतुहेम्निनागकेसरेकांचनीनि
शा॥धातुवादरतेकांस्यकारेकारंधमीनरि॥९२॥चर्चिकाचि
ह्लदथितेरवकामिन्योप्रकीर्त्यते॥विषदिग्धपशोर्मांसेगृंजनं
नारसोनके॥९३॥गहनंगव्हरेदुःखेवनेथांबुदमुस्तयोः॥घनः
पुंसिघनंवाद्यंचर्मस्यात्फलकत्वचोः॥९४॥चीनोवस्त्रव्रीहि
भेदेचिन्हंलक्ष्मपताकयोः॥चक्रिणोविष्णुभुजगकुलालयो

ग्रामयाजिनः॥९५॥ कंप्रेनाचलनं कंपे दलनी वस्त्रघर्घरी॥भूर्जे
फलकपाणौ च चर्म्य श्यालं तु षेपुमान्॥९६॥ निंबे पिचुर्दनं वाते ज
वलो देशवेगिनोः॥बुद्धे जिनो जित्वरे च जीवनं वर्तनांभसोः॥९७॥
शूरे दातरि च त्यागी व्रतिशोच्यौ तपस्विनौ॥ तपनो नरके भानौ वि
रलोऽल्पे कृशे तनुः॥९८॥ क्रीडादौ देवनं नाऽक्षे द्विजन्मा दंतविप्र
यो॥ दानं गजमदे त्यागे खंडने रक्षणेपि च॥९९॥ दर्शनं वर्णमुकुर
चक्षुःशास्त्रोपलब्धिषु॥ स्त्री दीर्घकोष्या दुर्नामा शेसिंधुम्ने बलेध
नो॥२००॥ धन्वा मरौ धन्व चापे धावनं गतिशौचयोः॥ निर्भर्त्सने
खलीकारालक्त्योरथ नंदनं॥१॥ देवोद्याने सुते पुंसि नग्नौ क्षपण
वंदिनौ॥ श्रुतौ दृष्ट्यां निशमनं खगं गापि नलिन्यथ॥२॥ ग्रंथि
प्रस्तावयोः पर्व विषुवत्प्रभृतिष्वपि॥ प्रतिमानं प्रतिछाया गज
गं तांतरा द्वयो॥३॥ पाकस्थाने कुलालस्य वाते च पवनः पुमा
न्॥ हरीतकी राक्षसी च पूतना थवराल के॥४॥ पाठीनो गुग्गु
लुद्रोर्णक्षो वृक्षोपलाशिनौ॥ फाल्गुनो मासि पार्थे च स्त्री विदग्धा च वाणि
नी॥५॥ वर्धमानः प्रश्नभेद शरावैरंड विष्णुषु॥ सेना नदी च वा
हिन्यौ छेदे स्तुत्यौ च वर्द्धनं॥६॥ भुवनं विष्टपे तोये भिन्नं दीर्णे वि
शेषिते॥ जन्माश्रयश्च भवनं भाजनं पात्रयोग्ययोः॥७॥ भूति
कांचनयोर्भर्म मलिनं भूषिते सिते॥ मानं प्रमाणे तौल्ये च मी
नो राश्यंतरे झषे॥८॥ मदनाः सिक्थधूस्तूरतरुभेदमनोभवाः
॥ मुनिर्वाचयमे बुद्धे लंकेश्वपा च मालिनी॥९॥ मातुलानी तु भंगा
यां मातृभ्रातृस्त्रियामपि॥ राशौ युग्मे च मिथुनं पिप्पली मधुसू
दनौ॥ थ्यापनं स्यान्निरसने कालक्षेपे च वर्तने॥ चतुःक्रोश्यां च
योगे च योजनं स्यात्तु वाहने॥११॥ गतौ च यानं योनिस्तूत्पत्ति
स्थाने भगेपि च॥ रसनं तु ध्वनौ स्वादे रसज्ञा रास्नयोः स्त्रियां॥
॥१२॥ यक्षे चंद्रे च राजा स्याद्रक्तः कामी च रागिणौ॥ गोपिते रो
चना कूटशाल्मलौ रोचनः पुमान्॥१३॥ निशा हरिद्रा रजनी

छेदे भूर्जे च लेखने ॥ राशीनामुदये लग्नं सक्तलज्जितयोस्त्रि
षु ॥१४॥ योषिद्विज्ञानचलनालक्षणं नाम लिङ्गयोः ॥ रिक्ते वि
तानशुल्के चैकलिङ्गं मध्यलग्नयोः ॥१५॥ दैवानिष्टफले सक्तौ
व्यसनं निष्फलोद्यमे ॥ स्थलं तु तान्ववस्थानं वामनो विष्णुदिग्ग
जौ ॥१६॥ स्वर्वभ्राश्च फले मुष्के वानं स्यूते कटे गतौ ॥ वृषपर्वाशि
वे दैत्ये वैष्णवं मुकुटे गतौ ॥१७॥ वेश्याकारेपि विषवी कामिनि क्लीब
लिङ्गिषु ॥ वृक्षादनी स्याद्वन्दायां स्त्रियां कुठारके पुमान् ॥१८॥
समालब्धे विभक्ते च विछिन्नं वाच्यलिङ्गकं ॥ लब्धे ज्ञाते स्थिते
विन्ने वेदनाज्ञानपीडयोः ॥१९॥ वर्त्तनी तर्कुपीठेपि स्त्रियां वर्त्तन
वर्त्तनोः ॥ वनश्चाजं तु केत्या प्रं विपलो होविय क्रते ॥२०॥ दैव
कृसिनिमित्ते च शकुनं पुंसि पक्षिणि ॥ चूडावान्कुक्कुटश्चापि शि
खी शृङ्गारिणौ त्रिनौ ॥२१॥ कमुकश्च सुवेशश्च पार्थिक्कोः श्वेतवा
हनः ॥ मयूरे भीमशक्तौ च शिखंडुप्रथविहेठनं ॥२२॥ विहिंसा
यां विडम्बे च प्रमेला भ्रमणं वधे ॥ श्येनः शुक्ले पक्षिभेदे शकुनिः
सौबले खगे ॥२३॥ धान्यभेदे पुमान् षष्टिहायनः कुंजरेपि च ॥
नासा घोसंज्ञानं कुसीसाधनं स्थि तुभेदयोः ॥२४॥ समानोदद
र्याभ्ये च संस्थानं मृत्युरूपयोः ॥ संतानः संततौ देववृक्षे चापत्य
गोत्रयोः ॥२५॥ स्तुतौ स्नाने च सवनं मरणेपि समापनं ॥ स्यंदनं
स्रवणे नाजुरथे तिनि शपादपे ॥२६॥ स्मृतत्ताने च शयने स्वप्नोः
श्च स्पर्शदानयोः स्पर्शनं स्पर्शनो वातः स्तूनं पुष्पफलेपि च ॥२७॥
सेवनं सीवनोपास्त्योः शाश्वताजौ सनातनौ ॥ पुनर्भवो च सूनुः
स्यात्स्थातर्यपिकनीयसि ॥२८॥ सीमावादे स्थितो क्षेत्रे स्वामी भ
र्त्तरि षण्मुखे ॥ धूमवंशा शरामत्याः सुपर्वाणः प्रकीर्त्तिताः ॥२९॥ क
पुर्दद्वविलासिन्यां कपोलावयवेपि च ॥ इति नान्ताः ॥ सजलेजलधि
षे कूपः क्लेपः संगवर्गयोः ॥३०॥ आक्षेपो भर्त्सनारूक्ष्याराक्
कल्पौ वेशाकल्पने ॥ तृणभिन्नुल्मिन्युलुपं चेद्रेनास्त्युडुपः प्लवे ॥३१

कल्पःशास्त्रेविधौन्यायेसंवर्तेब्रह्मणोदिने॥धान्येकुशेष्टमांशे॰
न्ह् कुतपश्छागकंबले॥३२॥गुणवृक्षेपिकूपोविदूसार्योस्त्रीकु
णपःशवे॥जिह्वापःशुनिमार्जारेत्रपु सीसकरंगयोः॥३३॥पा
दुकापांस्त्रियांवृक्षेपादपीठेचपादपः॥ पिंडपुष्पोजपाशोकौपु
ष्प कुसुमआर्तवे॥३४॥ग्रंथावृत्तौपशौशब्देस्वभावेनाटकादिषु॥
रूपमाकारसौंदर्यमानकेष्वपिदृश्यते॥३५॥शररोपणयोरोपो
लेपोलेपनजेमने॥विटपःपल्लवेस्तंबेषिड्गेमेदोवलंबपा॥३६॥
आक्रोशेशपथेशापस्स्वापःशयननिद्रयोः॥इतिपांताः॥त्रिषु
स्यात्कुत्सितेरेफोरवर्णेतुपुमानयं॥३७॥इतिफांताः॥गजग्री
वाबिलेकंबुःकलंबःशरनालयोः॥वृंदेकदंबोनीपेनाकादंबो
शरपक्षिणो॥३८॥प्लीहविप्लवयोर्डिंबःप्रलंबोदैत्यशाखयोः॥बिं
बेबिंबफलेरूपेसंबस्तुसलानने॥३९॥कल्याणवतिवज्रेचदैं
बोमहिषेऽपिच॥इतिबांताः॥स्वर्णारंभावष्टंभौबाणीछेदोप्य
त्रुष्टंभौ॥आरंभउद्यमेदर्पकामेब्रह्मणिचात्मभूः॥ऋषभोश्रे
ष्ठवृषभोकरभौ।धःकरोरुयोः॥४१॥कुंभोवारस्त्रियाःकांतेरक्षो
राशिप्रभेदयोः॥वीणाप्रसेवेकुकुभोनगभेदेर्जुनद्रुमे॥४२॥गर्द
भःसुकुकुमुदेखरेपुंस्यथदानवे॥जंबीरेन्यबहारेच जंभोदंतेपि
चेष्यते॥४३॥दुंदुभिर्दैत्यभेदेपिदंभःकैतवकल्कयोः॥दुर्लभ.क
लुरेकाम्येसदृशन्याजयोर्निभ ॥४४॥मुख्यराट्सत्रयोःपुंसिना
भिप्रा ण्यंगकेद्वयोः॥चक्रमध्येप्रधानेचस्त्रियांकस्तूरिकामदे॥
॥४५॥भूर्भूमौस्थानमात्रेचभ्रमूसेभृगुजेपुमान्॥रंभाकदल्या
प्सरसोर्विभुःस्यात्स्वामिभृत्ययो ॥४६॥पुनर्नवायांवर्षाभूःस्त्रीन
किंचुलुकेप्लवे॥विस्रंभःकेलिकलहेविश्वासेप्रणयेपिच॥४७॥सु
रभिःस्याद्वसंतेपिसभाद्यूतालयेपिच॥ इतिभांताः॥अभ्याग
मो विरोधेचशात्रुत्वायातमागमः॥४८॥मठादौब्रह्मचर्यादिच
तुष्केचाश्रमोस्त्रियां॥अंगीकृतावुपगमःसमीपगमनेपिच॥४९

उमादुर्गाः तसीन्त्वाथ पीडायां वीचिवेगयोः॥ वस्त्रसूक्ष्मेचरेखा यांचोर्मिः स्त्रीपुंसयोर्मतः॥५०॥ कुसुमंस्त्रीरजःपुष्पं क्षेमंकल्याणरक्षयोः॥ क्षेमाचंडा थकलमा लेखनीचौरशालयः॥५१ रेतोनिकामकाम्येषुकामंपुंसिस्मरेच्छयोः॥ क्षौममट्टेदुकूलेच ग्रामः संवसथेस्वरे॥५२॥ गुल्मः स्तंबेघटभेदे घर्मः स्वेदातपोष्मसु॥ जिह्मः स्यात्कुटिलेमंदे तल्पिमं तल्पकुट्टिमे॥५३॥ तोक्मं कर्णमलेपुंसि हरितेचहरियवे॥ दमोपक्षेप्सरेवसे दमो दमथुदंडयोः॥५४॥ धर्मौहिंसोपमायोगोपनिषत्स्वधनुष्यपि॥ कटेकुंड्याचनिगमोनियमो निश्चयेव्रते॥५५॥ यंत्राणांबंधयोश्चाथ पंचमः स्वरलंब्ययोः॥ पक्ष्मस्त्रीविंदुजालेब्जेव्यूहेसंख्यांतरे निधौ॥५६॥ गज्ञानांदंतबंधेपिप्रतिमानुकृतावपि॥ भूमिःस्थानेपि कुंदांबुनिर्गमस्त्रांतिसुभ्रमः॥५७॥ गांगेयभीषणौभीष्मोभीमः शंभौच पांडवे॥ नरकेमंगलेभौमः स्वरेमध्येचमध्यमः॥५८॥ यमः सैयमकीनाशसुग्मजेष्वथराघवे॥ रामः पशौभार्गवेच रुक्मं लोहसुवर्णयोः॥५९॥ संपत्कमलयोर्लक्ष्मी विभ्रमोभ्रमहावयोः॥ श्यामाशुद्राकोकिलाचश्यामोमंडपकालयोः॥६०॥ सार्वभौमोगजेराज्ञिसंभ्रमोसाध्वसादरौ॥ इतिमांताः॥ भिन्नासमानयोरन्यः स्याद्भिख्यायशस्यपि॥ आत्रेयीपुष्पवत्यां स्यान्नदीभेदेचनामुनो आश्रयः स्कंधआधारे आदित्योभास्करेसुरे॥६२॥ वेदोपदेशावम्नायो हृषीकेरेतसींद्रियं॥ इज्यास्यात्संगमेदानेयागेर्चायांगुरौपुमान्॥६३॥ उदयः प्रावुन्नतौचकषायः सुरभौरसे॥ कायः स्वभावेलक्ष्येचसंघेमूर्त्तौकदैवते॥६४॥ कौलत्यमनुतापस्यादयुक्तकरणेपिच॥ कश्यंकशार्हमद्येचकाद्रवेयो द्विरंगयोः॥६५॥ काव्यंप्रबंधेशुक्रेनाकुलायः स्थाननीडयोः॥ गव्यंगोहितदुग्धादौज्यायांगव्यातुगोकुले॥६६॥ भीष्मेनाहेम्निगांगेयं गोप्योगोप्यव्यचेटकौ॥ गातव्यगायनौगेयौगृह्य

मस्वैरिपक्षयोः॥६७॥चैत्यमायतनेबुद्धविंबेोद्देशकवृक्षयोः॥च
क्षुष्यं स्रुभगेचक्षुर्हितेस्त्रीकेतकेपिच॥६८॥युद्धेदृद्धेचजन्यं
स्याज्ज्यास्यान्मौर्व्योक्षितावपि॥कूटायुर्शंगलुद्रेोचत्रिवेधां
त्रितयेत्रयी॥६९॥निंद्येवस्त्रगृहेदूष्यंदस्यूतस्करवैरिणो॥भे
षजेद्रुविकारेचद्रव्यंभव्येचपित्तले॥७०॥द्वितीपातिथिभिस्य
त्योः पार्थेग्नौचधनंजयः॥निकायौसंघनिलयौनित्येसतत
शाश्वते॥७१॥पर्यायःस्यात्प्रकारेपिप्रायोनाभूमतुल्ययोः॥
पथ्यंहितेभयापथ्यापानीयंपेयनीरयोः॥७२॥पौलस्त्यौराव
णश्रीदौस्वर्गलाभौफलोदयो॥ब्राह्मण्यंब्रह्मसंघेपिबालेयौमृ
दुगर्दभौ॥७३॥वीर्यंप्रधानधातौचभयंभीकुब्जपुष्पयोः॥अन
धीनेसहायेचभुजिष्यौहस्तसूत्रयोः॥७४॥स्यान्मायाशांबरीबु
द्धौदैत्यशिल्पिपुत्र्योर्मयः॥मयुरश्वेकतुरूयेस्त्र्यंत्रिषुसुरूपके
॥७५॥आहतस्वर्णरजतेरजतेचनपुंसक॥वत्सेवल्लेबुधेरोहि
णेयोथश्लेषवाद्ययो॥७६॥लयोयुक्तेचलभ्यस्याद्विषयौदेश
गोचरौ॥वर्गप्रस्थानयोर्व्रज्यावदान्यस्त्यागवान्स्रुवाक्॥७७॥
स्त्रीमल्यांनिर्जनेशून्यंशौर्यंचारभटीबलं॥शांडिल्यौमुनि
मालूरौसौरभ्यचारुतापिच॥७८॥साध्यादेवाःफलंसाध्यंस्थे
योनेतृपुरोहितौ॥नाशेलेसहामारोग्येसामर्थ्येशक्तियोग्यते
॥७९॥एकस्त्रादैविचारेचसंख्याक्लीबेचसंयुगे॥हिरण्यंरेतसि
स्वर्णेमानभेदवराटयोः॥८०॥उरस्यपिचवृक्कापोहृदयंमान
सेपिच॥इतियांताः॥अंकुरोरोम्णिरुधिरेवारिण्यभिनवोद्भि
दि॥८१॥अमरानभिनालापीगुडूच्यामप्यथांबरं॥नागभि
न्नेधद्रव्यंचस्यादस्रंरुधिराश्रुणोः॥८२॥प्रस्तावेवसरोवर्षेचो
ष्ठनीचेपिचाधरः॥श्रेष्ठेप्यग्रोवतारस्तुतीर्थेवतरणेपिच॥८३॥
गलहस्तेप्यर्धचंद्रोकूपारःकमठेंबुधौ॥अज्ञातेस्त्रीकुंजेगा
रःश्रेष्ठाद्याच्यावनुत्तरौ॥८४॥नक्रेचौरेचावहारःस्यादभ्रंव्योम

मेघयोः॥ हविर्वन्हौचाग्निहोत्रेवक्षेलघुनिचागुरुः॥८६॥शक्तो
पिषंढश्वांडीराखंघ्रिःस्यात्पादमूलयोः॥ आसारःप्रसरणेस्याद्वे
गवृष्टौसुहृद्बले॥८७॥ आरःशनैश्चरेभौमेद्वंद्वआत्मनिवासवे
॥ गौरीश्वरीशिवास्त्वामिकंदर्पेपीश्वरःपुमान्॥८८॥ उदारोद
क्षिणस्थूलोद्रुमेभेद्वेष्युदुंबरः॥उग्रोंत्यजेशिवेत्क्षत्त्वेउस्त्रोदी
प्तोगविस्त्रियां॥८९॥ सिंहसटासुपुन्नागेवकुलेनागकेसरे॥ के
सरःपुंसिकिंजल्केचस्त्रीहिंगुनिनह्वयोः॥९०॥ मक्षिकायामपि
क्षुद्राक्षुद्रःस्यात्कृपणेत्रिषु॥कद्रुस्त्रिषुकडारेस्यात्कद्रुःस्त्री
नागमातरि॥९१॥ नापितस्योपकरणेकोकिलाक्षेपिचक्षुरः॥ भस्म
काचरसाक्षाराःकारुःकारकशिल्पिनोः॥९२॥ कर्बुरोराक्षसेपापे
कर्बुरंशबलेजने॥ कारापीडाबंधशालेक्रूरौकठिनभीषणौ॥९३
जंबुद्वीपसहाकन्याःकुमार्योश्वाशववारके॥ बालकेकार्तिकेये
चकुमारोभर्तृदारके॥९४॥ कलिकारस्तुधूम्याटेकरंजेपीतम
स्तके॥ सिन्धुस्थानेपिचक्षेत्रंकर्करौदृढदर्पणौ॥९५॥ शिंशपा
यांकृष्णसारस्तुद्यांचोयोत्पलेपिच॥ कर्णपूरःकुबेरस्तुनंदी
वृक्षेकपिंगयोः॥९६॥ कुशरीरेचशठ्यांचकच्छुरापामरेत्रिषु॥
कंदरःस्यात्गुहास्रण्योःकोट्टारौकूपनागरौ॥९७॥ कपोलेच
कटाहेचशस्त्रभेदेचकर्परः॥ भिक्षापात्रेकपालेचखर्परःस्तस्क
रेपिच॥९८॥ देवताडेखरास्त्रीस्यात्खरोगर्दभतीक्ष्णयोः॥ भ
द्रमुस्तेगुवाकेचखपुरोथद्रुमेपुमान्॥९९॥ रूप्येखलेचखर्जू
रंखुरःकोलदलेशफे॥ खरूरश्वेहरेदर्पेदंतेश्वेतेतुवाच्यवत्॥
॥४००॥ गुरुस्त्रिलिंग्यांमहतिदुर्जरालधुनोरपि॥ गायत्रीखदि
रेस्त्रीस्यात्छंदस्यपिषडक्षरे॥१॥ गुंद्रस्तेजनकेगुंद्रात्रिलिंग्यां
भद्रमुस्तके॥ गह्वरेहेगुहागुंजेपूर्द्वारिद्वारिगोपुरं॥२॥ नग्रक
न्योभयोगौरीगौरःस्यादुज्वलेपिच॥ गोत्रंनाम्निकुलेपुंसिशैले
भूगव्ययोःस्त्रियां॥३॥ स्वरेरणेचगोधारोगृध्रःस्याल्लोभिपक्षिणोः॥

कर्बुरेतिलकेचित्रंसुभद्रातारयोःस्त्रियां॥४॥चंद्रःशशिनिकर्पू
रेचारोबंधापसर्पयोः॥मृतेदेवकुलेचैत्रंनाभूभृन्मासभेदयो.॥
॥५॥सर्पेविष्णौचक्रधरश्चिकुरौरक्षभित्कचौ॥चक्रःकोकेव्रजे
पुंसिक्लीबेसैन्यरथांगयोः॥६॥ग्रामजालेकुंभकारभांडेराष्ट्रेचदृ
श्यते॥नदप्रभेदेवाद्येचझर्झरोथगुणध्वनौ॥७॥प्रसिद्धावपिटं
कारस्तारोत्युच्चस्वरेत्रिषु॥तारिण्यंगदमात्रौस्त्रीननात्क्षा
क्षिमध्ययोः॥८॥ताम्रेधेतिमिरंध्वांतेतोत्रेप्राजनवेणुके॥ध
न्याकेतुंबरीशुन्यांताम्रंशल्बेरुणेत्रिषु॥९॥पेटकेनाविचत्व
रीतुषारःशीकरेहिमे॥दूतिकर्त्तव्यता तंत्रमुपायश्चहिसाध
कः॥१०॥तीव्रंकटुनितांतंचदर्दरःशैलभुग्नयोः॥उपायेनिर्ग
मेद्वारंदारुस्याद्देवदारुच॥११॥दासीसुतोष्ट्रौदासेरौदेहयात्रा
शनेमृतौ॥दिगंबरोंधकारेचवाद्यमेघौच दर्दुरौ॥१२॥धात्री
भुव्यामलक्यांचहरिशैलौधराधरौ॥धाराहरिद्राश्वगतिनि
शांबुसृतिराजिषु॥१३॥धराधरौखड्गमेघौधीरःपंडितमंद
योः॥धीरंचकुंकुममथोधरापृथ्वीधरोगिरिः॥१४॥नेत्रोनेत
रिनेत्रंचगुणेमूलेविलोचने॥नारंशुंठ्यांनरौघेचनरोजेमान
वेर्जुने॥१५॥नरेंद्रोराजिकेराज्ञिविषवैद्येपिदृश्यते॥धान्योत्से
पेनिकारःस्याद्दुडूच्यामपिनिर्जरा॥१६॥नभश्चरौपक्षि
देवौपांशुलाचनिशाचरी॥वल्मीकवनयोर्नीव्रंपूरःस्वाद्यप
यश्चये॥१७॥सच्चारंभौपरिकारौखड्गफलेपिपुष्करं॥नद्यं
तरालेपात्रंस्याद्भांडेचाथनिशापतौ॥१८॥पृथक्चरोगजेयूथ
भ्रष्टेपक्षचरःस्मृतः॥स्थाल्यांमंथेपिपिठरंपवित्रंकुशमे
ध्ययोः॥१९॥देहोपाटलिपुत्रेचपुरंस्यात्गुग्गुलौपुरः॥वरो
जामातरिरतेकुंकुमेचनपुंसकं॥२०॥वक्रःशनैश्चरेक्रूरेपुटभेदे
तथानृजौ॥कुब्जवृसेहरेवारोबंधुरंरम्यनम्रयोः॥२१॥भ्र
मरःकामुकेभृंगेभरोतिशयभारयोः॥विषेस्वादौचमधुरंमल्लि

काश्चंचमाधुर्यं॥२२॥ मखाग्नौचमद्रावीरोमक्षिकायांचमत्सरः ॥महेंद्रोभूधरेशक्रेद्रवचक्रेचमंथरः॥२३॥ विभ्रमन्मथयोर्मारो मकरोराशियादसोः॥गमनोत्सवयोर्यात्रारुधिरंकुंकुमेपिच॥ ॥२४॥ वृक्षभित्वापयोरोध्रोदैत्यभेदेमृगेरुरुः॥लंबोदरःस्यादु ह्नानेगणानामधिपेपिच॥२५॥ लक्ष्मीपुत्रौस्मरहयौविस्तारौ स्तंभविस्तृती॥विप्रस्तातेस्त्रियांक्षेत्रेचयेरेणौचरोधसि॥२६॥ स्यादुभ्वरेचनक्षत्रेवल्लूरंगहनेपिच॥ वल्लूरंत्रिषुसंशुष्कमांस शूकरमांसयोः॥२७॥वैकल्येपिचविश्लेषेविधुरंविकलेत्रिषु॥ विकारौविकृतेरोगेविश्वकद्रूश्वभित्वखलौ॥२८॥ वरांगेकुंकुमे वेरंवेठरःशठमंदयोः॥अथव्यतिकरःपुंसिव्यसनव्यतिषंग योः॥२९॥पर्याणेशोपकरणेशारिःशकुनिकांतरे॥श्रीर्ल क्ष्मीवेशसंप त्सुभारतीशोभयोरपि॥३०॥ शिखरंशैलवृ क्षाग्रकक्षापुलककोटिषु॥पक्कदाडिमबीजाभमाणिक्यशक लेपिच॥३१॥ शुक्रंरेतोक्षिरुक्शुक्रोनाकाव्यज्येष्ठवन्हिषु॥ गजभूषाचशृंगारःशुषिरंगर्तवाद्ययोः॥३२॥ कुटजेवासवेशक्रो वरीशच्योःशतावरी॥शर्करीमेखलाछंदःशवरःसलिलेशि वे॥३३॥ स्थिरामहीशालपर्ण्योःशंबरंसंयमेजले॥ शंबरोदै त्यहरिणोशत्रंस्यात्कैतवेबले॥३४॥स्त्रोतांजनेचसौवीरंकां जिकेवदरेपिच॥हलतिग्मकरौसीरौसांद्रंमृदौघनेवने॥३५॥ तंत्वाद्यग्रंथयोःसूत्रंकारणेपिचदृश्यते॥ इतिरांताः॥शैलेऽ चलोःचलाभूमावरालःसर्जवक्रयोः॥३६॥ अलिःसुराप व्यलिहोःकल्लोलेप्याकुलंत्रिषु॥आलुर्गलंतिकायांस्त्रीक्लीबं मूलेचभेलके॥३७॥ आलिःसेतुःसखीपज्वाशौंडिकश्वा॥सु तीबलः॥आभीलंभीषणोकृच्छ्रेइलाभूवाग्बुधांगनाः॥३८॥ आर्द्रस्तूरण योरोलकालःस्यान्मृत्युकृष्णयोः॥अंशेवृहावं पिकलाकदलीध्वजरंभयोः॥३९॥ कफोणिघातेज्वालेच

कीलावह्नेःकीलदृष्यते॥शिरसोस्थ्निकपालोस्त्रीघटादेःशक
लेव्रजे॥४०॥काकोविषंचकाकोलोसात्नायामपिकंचलः॥धू
नकेपिकलकलःकामलःकामुकेमधौ॥४१॥कुलंगोत्रेगणेदे
हेजनान्वानेचकेवलं॥कपिलाशिंशपाकौंत्योःकपिलोग्नौमुने
मुनि॥४२॥कोलोकपालावुत्संगेवराहेभेलकेपिच॥पिप्पल्य
पिचकोलास्यात्कोलंचवदरीफले॥४३॥मृगेजलेचकमलं
कुवलेबदरोत्पले॥कल्लोलोशात्रवोल्लोलोपर्कट्यांचकमंडलुः
॥४४॥कर्मरंगतरौकर्मफलंदुःखेसुखेपिच॥करालोधूर्णतेले
पिदेशेकेशेचकुंतलः॥४५॥कौतूहलप्रशस्तेपिखल्लश्चर्मणि
चातके॥वस्त्रेनिम्नेचाथखलंशस्यस्थानेशठेत्रिषु॥४६॥मंड
लेमणिकेगोलंगोलागोदावरीसखी॥गोपोभूपश्चगोपालोच
पलःपारदेपिच॥४७॥चपलापिप्पलीलक्ष्मीपुंश्चलीविद्युतः
स्मृताः॥छलंछद्मस्खलितयोर्जबालोपेकशैवलो॥४८॥जं
गलोनिर्जनेदेशत्रिलिंगःपिशितेस्त्रियां॥जालंदंभेपिजंबीरेदेव
मेदेपिजंभलः॥४९॥झल्लाःतपोमिर्दुहितातलंमूलचपेट्योः॥
तालोगीतक्रियामानेहरितालेद्रुमांतरे॥५०॥लोहेहारमणौ
पुंसिपवाग्वातरलास्त्रियां॥ब्रह्मदारौपिचौतूलंतुलासाद
श्यपोस्तुला॥५१॥तमालोवरुणेखड्गेतापिच्छेतिलकेपिच॥
गुवाकेपिचतांबूलंविडंगेपिचतंडुलः॥५२॥दुकूलंश्लक्ष्णवस्त्रे
पिचार्थेपत्रेछदेदलं॥धवलागविनाशेदेशुक्लसुंदरयोस्त्रिषु॥५३॥
परमाणौचपीलुःस्याद्देहेचात्मनिपुद्गलः॥शस्त्राकारेप्यथतरौपिप्प
लःपिप्पलंनले॥५४॥शाल्मलीशिंशपाचैवपोतिकाचापिपिच्
छिला॥सश्मश्रुयुवतीपालिःपंक्तिःकर्णलतापिच॥५५॥वीणा
दंडेप्रवालेस्त्रीविद्रुमेनवपल्लवे॥नलेकाशेपोटगलःपित्तयुक्ते
चपित्तलः॥५६॥पिंगलःस्यात्कपावग्नावाशुव्रीहिश्चपाटलः
॥फलंजातीफलेलाभेबाणाग्रेफलकेपिच॥५७॥फेनिलंवदरे

शिरे बालो ह्रीबेरकेशयोः॥ बलिर्जराश्लथत्वेस्त्रीगृहदारुवसुरौ बली॥५८॥ बलं गंधरसेरूपेक्लीबेवाद्पालके स्त्रियां॥ बहुलः कृष्णपक्षेपिमेलानंदापि वार्दलः॥५९॥ दुर्दिनेप्यथ वेलास्यात्सिंधोः कूलेच भोजने॥ ऋषिभेदप्लवे पुंसि भेलं भीरुहृदित्रिषु॥६०॥ मेखला द्विनितंबे पिग्रहेना मंगलं शुभे॥ निकटेपिच मूलं स्यात्कूरूपिच मातुलः॥६१॥ मौलिः कंकेलिवृक्षेपि मल्लः पात्रे कपालिनि॥ बलीयसिच मत्स्येच मंडलं परिधौ गणे॥६२॥ बिंबे देशेनाच श्रुनि रसालस्त्विक्षुचूतयोः॥ जिव्हाकमलयोर्लोला शालास्याद्गृहशाखयोः॥६३॥ तरुजातौ मत्स्यभेदे शालो हाले नृपेपिच॥ निगडे पुंस्कटीवस्त्रवस्त्रेच शृंखलं त्रिषु॥६४॥ शृगालि गंधमृगे धान्ये शयालुः कुक्कुरेलसे॥ शकलं वल्कले खंडे शीतलः शिशिरेनिले॥६५॥ षंडाली तैलमाने स्यात्सारसी स्त्री च कामुकी॥ सिध्मला शुष्कमीने स्त्री त्रिलिंग्यां तु किलासिनि॥६६॥ ऋजौ रसे च सरलः सालो वरणसर्जयोः॥ हस्तिमल्लो गजास्ये च हेलावज्ञाविलसयोः॥६७॥ ॥इति लांताः॥ पाने च मद्यसंधाने स्नाने चाभिषवः स्मृतः॥ मृतावसत्वे चाभावः स्यादृजः पुष्पमार्तवं॥६८॥ आश्रवौ गीकृतौ वश्ये आहवौ यागसंगरौ॥ उपप्लवो राहूत्पातौ क्लितवौ मत्तवंचकौ॥६९॥ खलीने स्त्री कविः पुंसि काव्यकृच्छुक्रसूरिषु॥ कैतवं तुच्छ ले घृते राजिकायां स्रुतिस्रवः॥७०॥ केशवः केशवीन्विष्णु शालवो मुनिलोध्रयोः॥ जीवो स्त्री जीविते पुंसि गुरुजंत्वोः स्त्रियां गुणे॥७१॥ तत्वं विलंबिते नृत्ये स्वरूपे परमात्मनि॥ मेघरात्ति सुरे देवो हि जिव्हो व्याडसूचकौ॥७२॥ ध्रुवो वटे स्मरारौ च गीतिस्थकुभेदयो ध्रुवा॥ धवो धूर्तेप्यथ नवो नूतने वा समे स्तुतौ॥७३॥ प्लवो निषादे मर्कट्यां भेके भेलगतौ कपौ पल्लवो विस्तरे षिंगे किसले विटपे वने॥७४॥ घटादौ पार्थिवो राज्ञि वल्लवः सूदगोपयोः॥ गजे धन्विनि शुक्रे च परशुरामे च भार्गवः॥७५॥

दूर्वागौरीचभार्गव्योसत्तासंसारयोर्भवः॥भावोगौरवितेजंतौ
पदार्थेभिनयांतरे॥७६॥माधवोहरिवैशाखौराजीवोमृगमी
नयोः॥रौरवोघोरनरकौलवश्छेदनलेशयोः॥७७॥करजभित्तु
लेलट्वाःवद्यपक्षिप्रभेदयोः॥विष्वंस्तुव्यासमस्तेचनिर्वाणेविभ
बोधने॥७८॥अम्भोधेवाडवंनस्त्रीपातालेनाहिजौर्वयोः॥वडवा
ऽश्वाकुंभदास्योर्योगेकीलेहरेशिवः॥७९॥स्करवंदेमंशिवंश्यामा
॥मलकीचाभयाशिवा॥पाडवस्त्वरसेरागेसैंधवोलवणाश्व
योः॥८०॥स्वोस्त्रियांज्ञातिधनयोःस्वमात्मनिनपुंसकं॥आधेय
धारणेसत्त्वेमेलकेपिचसंभवः॥८१॥इतिवांताः॥अपभ्रंशो
दुष्पतनेभाषाभेदापशब्दयोः॥टीकादर्पणावादर्शावाशातृष्णा
दिशोस्त्रियां॥८२॥प्रभुशंकरयोरीशःस्त्रियांलांगलदंडके॥दि
गबरेकपौकीशःकेशोवालप्रचेतसोः॥८३॥जीवितेशोयमेना
थेदेशःसंहननेपिच॥सर्पक्षतेथज्ञानेचलोचनेदर्शनेचदृक्॥
॥८४॥नाशःपलायनेमृत्यौनिस्त्रिंशोखड्गनिर्दयौ॥निशारा
त्रिर्हरिद्राचमृगादोप्रथमेपशु॥८५॥पुरोडाशोहविर्भेदेचम
स्यापिष्टकस्यच॥रसेसोमलतायाश्चहुतशेषेचकीर्त्यते॥८६॥
पाशःकचार्थेसंघार्थःकर्णांतेशोभनार्थकः॥छत्राद्यंतेचनिंदा
र्थेपाशःपस्यादिबधने॥८७॥वार्ताहरेपुरोगेचसहायेचप्रति
स्पशः॥लोमशोमेढ्रकेपिस्याद्विवशोवशविह्वलौ॥८८॥वंशो
वर्गेचपृष्ठांशेवेशोवेश्यागृहेपिच॥आयत्तताप्रभुत्वेचवशःपर
वशेत्रिषु॥८९॥दानेरोगेपिचस्पर्शःसदृशस्तूचितेसमे॥इति
शांताः॥श्राष्ट्रसुस्थेबलीषेनाकिशोरहरिशंशुषु॥९०॥अभिला
षेऽनुतर्षःस्यात्पानेछाचाप्यथामिषं॥संभोगोत्कोचमांसेषुउ
पाबाणात्मजानिशा॥९१॥भल्लूकेशोणकेचर्क्षोनक्षत्रेपुंनपुंसकं॥
ऋषिर्वेदेपिकक्षस्तुदोर्मूलेशुष्ककानने॥९२॥कक्षावरत्राप्रकोष्ठ
स्पर्द्धाक्रूहणिकासुच॥कुल्माषःकांजिकेनातुयवकेस्याद्याविले॥९३

पापेच कलुषं घोषः शब्दाभीरनिवासयोः॥ शुचौ दक्षे च नोक्षस्त्या
तर्षौ लिप्सापिपासयोः॥ ९४॥ दक्षः प्रजापतौ ताम्रचूडे हरवृषेप
टौ॥ पौरुषं मानभेदे च पुन्नागे पुरुषो नरे॥ ९५॥ पक्षौ मासार्धपा
र्श्वौ च महिषी राजपत्न्यपि॥ मूर्खे माने फले माषो मेषो राश्यंतरो
रणौ॥ ९६॥ संख्यायां तु ननालक्षं क्लीबं व्याजशरव्ययोः॥ हरता
क्ष्यौ विशालाक्षौ शेषो नानंतसीरिणोः॥ ९७॥ उपयुक्तेतरे त्वस्त्री
शैलूषो नटबिल्वयोः॥ शुश्रूषा परिचर्या च सहर्षः स्पर्धने मुदि॥ ९८
॥ इति षांताः॥ योग्यायामंतिकेभ्यासोऽधिवासौ स्थानसंस्क्रिये॥
आख्यायिकापरिच्छेदे चाश्वासो निर्वृतावपि॥ ९९॥ उदर्चिरुत्क्रमेव
न्हावेनः पापापराधयोः॥ कनीयाननुजेऽल्पे च कंसो मानेऽसुरांतरे॥
॥ ५००॥ तैजसे लस्य पात्रे च कुत्सः स्तबककल्हारयोः॥ छंदः पद्यश्रुतीर
च्छासु तरो वेगे बलेपि च॥ १॥ तमः शोकेप्यथ हिमतौ नाधर्मे व्रते तपः
पद्मे स्वर्णे तामरसं निशा दुर्गा च तामसी॥ २॥ मणिदोषे दरे त्रासो दा
सी चित्तार्थे चेटयोः॥ झिंट्यां च दासी दीर्घायुर्नेषिः काकश्च शाल्मलिः
॥ ३॥ पोत्रे च वक्रशाख्याने स्वांते सरसि मानसं॥ माश्च चंद्रमासयोः पुं
सि खर्जूरे स्वो मेहारसः॥ ४॥ राजहंसो नृपाग्रे च जिव्हा भूः शल्लकी
रसा॥ जले शरीरधातौ च पारदस्वादयो रसः॥ ५॥ भाषा शृंखलके
रासः क्रीडायामपि गोदुहां॥ रहो रते च गुह्ये च रभसो हर्षवेगयोः
॥ ६॥ विहायाः शकुने पुंसि विहायः खे नपुंसकं॥ पुत्रादौ तर्णके व
र्षे वत्सः क्लीबं तु वक्षसि॥ ७॥ रसे क्रूरे च विकृतौ बीभत्सस्त्रिषु नार्जु
ने॥ व्यासो मुनौ च विस्तारे बर्हिर्नो कुशशुष्मणोः॥ ८॥ अग्रे प्रधाने
च शिरः श्रीवासो विष्णुधूपयोः॥ सुमनाः पुष्पमालत्योः स्त्रियां
नां देवधीरयोः॥ ९॥ वीणाभेदे सर्जरसो धूपकेप्यथ सारसं॥ पद्मे
ना पक्षिणीं द्वौ च सरो नीरतडागयोः॥ १०॥ हविः सर्पिषि हव्ये च हं
सस्तुरगसूर्ययोः॥ निर्लोभे नृपतौ विष्णावंतरात्मनि चप्यते॥ ११
इति सांताः॥ अवग्रहः स्यात्प्रकृतिभाववृष्टिविबंधयोः॥ ९

अवरोहोवतरणेविटिपेचलतोद्गमे॥१२॥आरोहस्तुनितंबे॒
स्याद्दैर्घ्येचसमुच्छ्रये॥शक्तौस्नेहेचाग्रहःस्याद्दोहातूद्यमवा
छयोः॥१३॥सूपेचपाकपात्रेचकटाहोमहिषीशिशौ॥खड्गकोषे
चकलहोदासूहश्चातकेपिच॥१४॥समारंभेपिपटहोब्रह्मण्य
पिपितामहः॥प्रवाहोव्यवहारेचबहुर्विपुलसंख्ययोः॥१५॥व
राहःसूकरेमेघेमुस्तकेप्यथमूर्छने॥अविद्यायांचमोहःस्याद्ध
षस्कंधेःनिलेवहः॥१६॥देहनिर्माणसैन्येषुव्यूहःस्यादथविग्रह
॥संग्रामेप्रविभागेचदेहविस्तारयोरपि॥वैदेहीपिप्पलीसीताव
णिक्स्त्रीरोचनास्वपि॥संक्षेपेपिसंग्रहःस्यात्सिंहौवार्ताकुः
वासकौ॥१८॥राशिभेदेहरौसिंहःश्रेष्ठार्थेचोत्तरेस्थित॥स्नौहदे
घृततैलादौस्यात्स्नेहोःप्यव्ययाःपरे॥१९॥इतिहान्ताः॥अथा
व्ययाःपरेवाच्यानञभावेनिगद्यते॥तद्भिन्नेतदन्येचनिषेधेपि
चदृश्यते॥२०॥सादृश्येचेषदर्थेचद्विरुक्मध्यविलासयोः॥पुनर
र्थेगभोःर्थेचसुष्ठु स्त्यर्थप्रशंसयोः॥२१॥चपादपूरणेपक्षांतरेहे
तौविनिश्चये॥हाविस्मयेप्रमोदेचओमेवंप्रणवार्थयोः॥२२॥
युक्तार्थेसाधनार्थेचसांप्रतंतद्विदोविदुः॥किंवितर्केचानुमतौवा
र्तायामस्त्रचौकिल॥२३॥प्रातर्दिनेचपूर्वत्रेत्यर्थेपूर्वेद्युरिष्यते॥
॥इतिनानार्थवर्गः॥आनंदःस्तौशुभंदिष्ट्याकटवेकटचाद्भुते
॥भूर्भुवःस्वस्त्रिभुवनमनागर्थेदरंस्मृतं॥२४॥आमंइमभ्युप
गमेनवरंकेवलार्थकम्॥प्रातरर्थेःनपत्यतिक्षणमात्रेक्षणस्
णो॥२५॥क्षेमपुण्येस्वस्तिनास्यादुच्चैरर्थेःदृकीर्तितम्॥वारंवार
स्वस्वदर्थेवारंवारेणचेष्यते॥२६॥उताहोयदिवायद्वाकिंवानेति

---

अथाव्ययानिश्रीण्यानंदार्थस्यद्वेअद्भुतार्थस्यत्रिभुवनस्यैकंईषदर्थस्यै
कं॥२४॥अभ्युपगमार्थस्यैकंकेवलार्थस्यैकंप्रातरर्थस्यैकंक्षणमात्र
स्यैकं॥२५॥द्वेपुण्यार्थस्यद्वेउच्चैरर्थस्यद्वेशपस्वदर्थस्य॥२६॥षट्विक

समाड्मे॥ किंत्वर्थेपि तु पद्यर्थे सचे त्रोक्तादिवाचकं॥२७॥ अस्ति
तु कालसामान्ये तिडंत प्रतिरूपकं॥ सज्जःसहार्थे नेस्यात्तु निषे
धे यदि शेषगीः॥२८॥ विभाषान्यतरस्यां वा विकल्पार्थाः प्रकी
र्तिताः॥ तेद्दतिस्यात्तु गे त्वर्थे मयेत्यर्थे च मेद्दति॥२९॥ ॥इत्य
व्ययवर्गः॥ ॥लिंगादिसंग्रहे ऽनुक्तममरेणाभिदध्महे॥ स्त्रिया
माजिर्दरज्जालि पुरुड्मषाः समाः शरत्॥३०॥ सिकता या बहुत्वे
पि विंशत्याद्येकवागपि॥ पुंस्त्वे हाहा हूहूर्ग्रंथिः पाणिः कलि रिति
मौलिः॥३१॥ अंजलिरंघ्रिःकुक्षिर्मारकल्लोकोत्तरासंगाः॥ यवक
वातसंकेतपोतकर्तगरुच्छदाः॥३२॥ श्लेष्मोष्मपापयक्ष्मास्या
त्मोनोवानायनस्तनः॥ फेनाभिजनकलापनिकाल्पाहारो
द्गारोपलकल्लोलाः॥३३॥ फालचषालक्कीतंडुलशैवलखलवि
भवप्रसवाः॥ आनाऽपजननाडीभ्योपुगमेगंपद्व्रणौ॥३४॥
आनंदे दुंदुभिरथ बहुत्वेप्यसवोऽग्रहाः॥ सक्तवो वल्गुजालाजा
दाराः प्राणादशाद्दति॥३५॥ क्लीबे कलत्रविषबीजकटस्वरत्न
तल्पोत्ककुंकुमप्रवीडतृणाक्षराणि॥ शृंगाटपीठगुदभेषजशृष्ट
किण्वदैवाम्बुभाम्बुचिबुकोडुपसादसानि॥३६॥ यकृत्कुहकलि
ध्मानि तीरंकालश्वजानु च॥ धर्मार्धसारमित्राण्यंगदनन्याय्य
बंधुषु॥३७॥ पुंनपुंसकयोर्दारुजीवातुस्थाणुसीधवः॥ स्याद्व
स्तकहिगुतितउसानुकंबुकमंडलु॥३८॥ गोमयकुमुदबिबकु
बिबशंखाश्रमश्रृणसुवर्णतोरणाः॥ नूपुरशिखरतूर्याशय
हांकुशबर्हिपल्लवाः॥३९॥ व्रतदिनमासवर्षादलवल्कैको
टरखंडवासवाः॥ चंदनपद्मधर्मकोलाहलकिसलयदेहदोहदाः

---

ल्पार्थस्य द्वे किंत्वर्थस्य द्वे पद्यर्थस्य॥२७॥ कालसामान्यस्यैकं स
हार्थस्यैकं निषेधार्थस्यैकं॥२८॥ त्रीणि विकल्पार्थस्य त्वर्थस्य
र्थस्यैकं मयेत्यर्थस्यैकम्॥२९॥

कुलिशध्वजकार्षापणनिधानमुस्ताककोरुशृंगवलयाः॥ पट
लप्रवालचषकोपवासकासारकटकसंताना॥४१॥ आकाशकुं
जकुतपौदनवारबाणपुस्तावतंसनखमंडपकल्कपुच्छाः॥ कांता
रकंकणतडागकिरीटराष्ट्रतीर्थव्रणस्तवकसंक्रमपीठकानि
॥४२॥ समरसरकरणविटपागनागैरिकदैवतकुटागाराः॥ प्रो
थमुहूर्त्तदिवसफलानिमासनिदाघमुसलतिलकानि॥४३॥
वल्मीकबाल्हीकवृषणद्रोणगांडीवनिगडानिच॥ मुकुलादिव
विज्ञेयंशिष्टसंस्मृतोपरं॥४४॥ अथस्त्रीनपुंसकयोः केलिमे
णियोनिर्मेसिर्मुनिः॥ मरीचिशाल्मलिः स्वातिःश्रेणिर्मुष्टिस्तिथिः
सृणिः॥४५॥ ऊर्मिर्गभस्तिरशनिर्वैपार्ष्णीशुधिराशयः॥ वस्तिश्च
किष्कुःकुटुम्बश्चवेश्वतन्निबवाद्वत्॥४६॥ गंडूषगर्जजागरभुज
कीलज्वालवर्तकक्रीडाः॥ उत्कंठसटवराटकरभसाःस्त्रीत्वेतु
टाबंताः॥४७॥ शल्लकोवृश्चिकः कीटः शारस्तूणा घटः करः॥ शं
फरोवेत्तसश्चामीस्त्रियाङ्न्ताः प्रकीर्तिता.॥४८॥ स्त्रीक्लीबयो
रुडुर्दामाच्चर्दिर्ज्योतिःसरोर्चिषः॥ सुखलसंवणिज्यंचबडिशक्रो
डपाटलं॥ तारकंरसनंनीतमेतेटाबंतकाः स्त्रियाम्॥ ज्योत्स्ना तु
नगरीस्थानस्थलानिपुरपाटलं॥५०॥ त्रिलिंग्यांतुप्रतिसरर
स्फुलिंगनखरार्गलाः॥ कंदरंशृंखलंनालंवल्लूरफलमुस्तका.
॥५१॥ जभश्चटाबंताएतेस्त्रियामथबिभीतकः॥ हरीतकाटंक
तटकवाटाश्चगुणेवटः॥५२॥ मंडलेशलभंभल्लावकेकलशकंदलौ
॥ मृणालामलकौदाडिमश्चङ्यंताः स्त्रियामिमे॥ करणेल्युट्त्रिपु
ग्यथातस्यव्याख्यानमित्यद्.॥ सूत्रकंडाष्यरूशांवत्तुमानइतीछ
ति॥५४॥ ॥ इतिलिंगादिसंग्रहवर्गः॥ ॥ दृष्टप्रयोगायेशब्दाः
प्रायस्तइहकीर्तिताः॥ अप्रयुक्तास्तपाणिन्यादिषुदृष्टाप्युपेक्षि
ताः॥५५॥ इतितृतीयकाण्डःसमाप्त.॥ इतिश्रीपुरुषोत्तमदेवरचित
त्रिकाण्डशेषाभिधानकोशःसमाप्तः॥ ॥ ॥ ॥

श्रीगणेशाय नमः॥ शुद्धवर्णमनेकार्थं शब्दमौक्तिकमुत्तमम्॥ कंठे कुर्वंतु विद्वांसः श्रद्धया नादिवानिशं॥१॥ शब्दाम्भोधिर्यतोनंतो कुतो व्याख्या प्रवर्त्तते॥ स्वानुबोधैकमानाय तस्मैवागात्मने नमः॥२॥ सरस्वत्याः प्रसादेन कविर्बध्नाति यत्तदम्॥ प्रसिद्धमप्रसिद्धं वा तत्प्रमाणं च साधु च॥३॥ शिवः शर्वः शिवः शुल्कः शिवः कीलः शिवः पशुः॥ शिवा गौरी शिवा क्रोष्ट्री शिवं श्रेयः शिवाभया॥४॥ गौरी शिवप्रिया प्रोक्ता गौरी गोरोचना मता॥ गौरी स्यादप्रसूता स्त्री गौरी शुद्धो भयान्वया॥५॥ हरिरिंद्रो हरिर्भानुर्हरिर्विष्णुर्हरिर्मरुत्॥ हरिः सिंहो हरिर्भेको हरिर्वाजी हरिः कपिः॥६॥ हरिरंशुर्हरिर्भीरुर्हरिः सोमो हरिर्यमः॥ हरिः शुक्रो हरिः सर्पः स्वर्णवर्णो हरिः स्मृतः॥७॥ दिग्दृष्टिदीधितिस्वर्गा वज्रवाग्बाणवारिषु॥ भूमौ पशौ च गो शब्दो विद्वद्भिर्दशसु स्मृतः॥८॥ मधुमद्यं मधुक्षौद्रं मधु पुष्परसं विदुः॥ मधुर्दैत्यो मधुश्चैत्रो मधूकोपि मधुर्मतः॥९॥ क्षुद्रा वेश्या नटी क्षुद्रा क्षुद्रा स्यान्मधुमक्षिका॥ असद्विष्णुर्नरः क्षुद्रः क्षुद्रा स्यात्कंटकारिका॥१०॥ वाहो युग्मं घने वाहः प्रवाहो वाह उच्यते॥ वाहो मापाविशेषश्च वाहो वाहुरिति स्मृतम्॥११॥ दुष्टकादिच यो हारो हारो मुक्तागणः स्मृतः॥ हारो मणिविशेषश्च हारो रजत उच्यते॥१२॥ आत्माभावो मनोभावो भावः सत्ता भवोपि च॥ भावः पूज्यात्मको लोको पदार्थो भाव उच्यते॥१३॥ कुथा कन्था समाख्याता कुथः स्यात्करिकम्बलः॥ कुथः कुशः कुथः कीटः ख्यातश्चापी द्विजः कुथः॥१४॥ कुशे काले तिलेच्छागे कम्बले सलिलेम्बरे॥ दौहित्रे खड्गपात्रे च क्रौ कुतपाख्या प्रवर्तते॥१५॥ वाणे वाचि पशौ भूमौ दिशि रश्मौ जले क्षिणि॥ स्वर्गे मातरि वज्रे ग्नौ सुखे सत्ये च गोध्वनिः॥१६॥ स्वर्गे भे से च वक्त्रे च वलीवर्दे च गोः स्मृता॥ त्रिषु त्रिषु नयनदिग्भागमातृवाग्भूजलेषु च॥१७॥ श्रियां यशसि सौभाग्ये योनौ कांतौ महिम्नि च॥ सूर्यसंज्ञाविशेषे च शशांके च भगश्रुतिः॥१८॥

पर्य्यन्येराद्रिगीर्वाणेव्यवहर्त्तरिभर्तरि॥मूर्खेवालेजिगीषौचदे
वोक्तिर्नरिकुष्टिनी॥१९॥मूर्द्धिवित्तेजलेकायेसुखेब्रह्मणिमारुते॥
कामेकालेसुवर्णेचकशब्दोद्रविणेध्वनौ॥२०॥नूर्य्यास्येश्रीफले
पद्मेकुंजराग्रकरेदिवि॥द्वीपेतीर्थेनिमित्तेचविशिष्टेपुष्कर ध्वनिः
॥२१॥रसोजलेरसोहर्षोरसःशृङ्गारपूर्वकः॥रसःसालद्रुनिर्यासः
पारदोपिरसोविषं॥२२॥क्षीरेपुष्परसेतोयेमद्येमएहेघृतेस्रजि
संप्तस्वर्थेषुकीलालप्रवदंतिमनीषिणः॥२३॥तिलपिष्टेमलेमांसे
जंम्वालेकोमलेश्मनि॥शवेक्षीरेवलेप्राज्ञाःपललंपरिचक्षते॥२४
जैवेराज्ञिविधौधर्मेतपस्विनितुरंगमे॥शीतेपक्षिविशेषेचहंस
शब्दोहरेपिच॥२५॥हयपुच्छध्वजेपुण्डेशैलेपुंसिगुणाधिके॥विषे
धामनिभूषायांललामेतिवुधैर्मतं॥२६॥वसुस्सूर्योवसुर्देवोवसुर्व
न्हिर्वसुर्मही॥वसुरत्नंवसुद्रव्यंवसवोष्टौध्रुवादयः॥२७॥अक्ष
राणिस्मृतावर्णाचर्णाभ्येतादयोगुणाः॥वेणौवाद्यगुणागाथावर्णा
गेयाद्विजादयः॥२८॥वर्णोगुणाक्षरंजसःशुक्लादिब्राह्मणादिषु॥व
र्णस्तुतौकथायांचवर्णःस्याद्रूपभेदयोः॥२९॥शुक्लोवर्णोर्ज्जुनो
नामपांडवोप्यर्जुनोमतः॥अर्ज्जुनस्तृणजातिस्यादर्ज्जुनःककुभो
द्रुमः॥३०॥वलिस्त्रिमध्यभागोर्म्मिर्वलिर्वर्षजराकृतिः॥वलिपूजो
पहारःस्याद्वलिर्दानवसत्तमः॥३१॥व्रणस्यावरणेपट्टःपट्टोभूमादि
ताक्षरम॥वीरदीक्षास्मृतःपट्टःपट्टःस्यादपिचासनम्॥३२॥रध्रेव
स्त्रेविनामध्येव्यवधानेन्तरात्मनि॥वहिर्योगेवकाशेचविशेषेव
सरेन्तरम्॥३३॥अरिष्टंगृहमित्युक्तमरिष्टोवृषभासुरः॥काकनि१
म्वावरिष्टोचअरिष्टंक्षेममीरितं॥३४॥मंडलंभूमिभागश्चमंडलंश
रमासुतः॥मंडलंवर्तुलंप्रोक्तंसंघातोमंडलंमतं॥३५॥इंद्रियंकंव
लप्रोक्तंकम्वलोरोमजःपटः॥कम्वलंतुगवांसास्नाकंवलेकंवलं
विदुः॥३६॥कुंतलोदेशपर्यायःकुंतलःकेशवाचकः॥कुंतलःसूत्रधार
श्चकुंतहस्तोपिकुंतलः॥३७॥मणिर्लिंगाग्रिमोभागोमणिःप्रोक्तोभग

ध्वजः॥ मणिः कूपमुखंज्ञेयं पद्मरागादिकोमणिः॥३८॥ तंत्रं शा-
स्त्रे कुले तंत्रं तंत्रं सिद्धौषधीक्रिया॥ तंत्रं सुखं बलं तन्त्रं तन्त्रं प
वनसाधनं॥३९॥ नेत्रं वस्त्रविशेषश्च नेत्रं चक्षुरुदाहृतं॥ परिवर्त
गुणो नेत्रो नेत्रः कस्तूरिकामृगः॥४०॥ वातादिप्रकृतिर्धातुर्धातुर्दे
हरसादिकम्॥ क्रियाभावः स्मृतोधातुर्धातुः शैलोपलोद्भवः॥४१॥
सुधा प्रासाद भाग द्रव्यं सुधा विद्युत्सुधामृतम्॥ सुधैकं भोजनं ज्ञेयं सु
धाधात्री सुधा स्नुही॥४२॥ कांडो बाणस्तुलाकाण्डः काण्डः संघात
द्रष्यते॥ कांडः कालो बलं कांडं कांडं मूलं तरोरपि॥४३॥ वेला काल
विशेषः स्याद्वेला सिंधुजलोद्गतिः॥ वेला सेवाङ्कुली च्छेदे वेला द्रोण्य
न्तरे ध्वनिः॥४४॥ उत्सवे च प्रकोष्ठे च मुहूर्ते नियमे तथा॥ कालशा
ब्दो व्यवस्थायांसमयेपिनिगद्यते॥४५॥ भ्रूणो भीरु द्विजो भ्रूणो भ्रू
णो गर्भाशयः स्त्रियाः॥ भ्रूणोमृजः शिशुर्भ्रूणो भ्रूणो विकल उच्य
ते॥४६॥ अहिर्दैत्यविशेषः स्यात्सूर्योप्यहिरहिध्वजः॥ भुजङ्गोहिः
समाख्यातः सिंहिकासूनुरप्यहिः॥४७॥ व्यालोहिः स्वापदो व्या-
लो व्यालः स्यात्कुटिलः करी॥ प्रमादवान्नरो व्यालो व्यालो बालउ
दाहृतः॥४८॥ शब्दादिविषयाः पंच प्रसिद्धा इन्द्रसंज्ञया॥ श्रेष्ठ इन्द्रः
समाख्यातो देवराट् इन्द्र उच्यते॥४९॥ पयस्विन्यर्जुनि धेनुर्धेनुः
कुंजरकामिनी॥ असिपुत्री मता धेनुर्धेनुर्वृत्तिः शिवंकरी॥५०॥
धर्मो वृषो वृषः श्रेष्ठो वृषो गौर्महिषो वृषः॥ वृषो बलं वृषः कामो वृष
णो वृष उच्यते॥५१॥ योगो युक्तिविशेषः स्यात्संयोगो योग उच्यते॥
योगश्चागामिको लाभः समाधिर्योग इष्यते॥५२॥ शलिर्मुखः श
लिर्गर्भः शलिर्भृङ्गः शलिर्गदः॥ शलिः सर्पविशेषश्च शलिः कलिरु
दाहृतः॥५३॥ सीता लक्ष्मीरुमा सीता सीता सस्याधिदेवता॥ सीता-
शीरध्वजापत्यं सीता मन्दाकिनी मता॥५४॥ सीताचालकनंदा च
चक्षुर्भद्राच्युताः क्रमात्॥ प्रयागादीनां प्रवाहानां गयानामप्रकी
र्त्तितम्॥५५॥ आदिष्टस्त्वचिपो नाभिर्नाभिश्चक्रस्य पिण्डिका॥

कुटुंबस्याग्रणीनाभिर्नाभिर्ल्लिम्नोदरीतथा॥५६॥ गोत्रनामान्वयेगोत्रोगोत्रश्चधरणीधरः॥ गोत्रावसुंधराज्ञेयागोत्रंचप्रवरंस्मृतम्॥५७॥ शुक्रंदेहवतांबीजंशुक्रमक्षिरुजंविदुः॥ज्येष्टमासस्मृतःशुक्रःशुक्रोदैत्यपुरोहितः॥५८॥ घनोमेघोघनंसान्द्रंकांस्यतालादिकंघनं॥ घनंसंघोपननित्यंघनःस्याल्लोहमुद्गलः॥५९ रामास्त्रीजामदग्न्यश्चरामोरामोशिताशितो॥ रामःपशुविशेषश्च रामोदशरथात्मजः॥६०॥ द्रोणस्यात्कौरवाचार्योद्रोणःकाकइतीरितः॥द्रोणोगिरिविशेषश्चद्रोणःस्याच्चतुराढकः॥६१॥ द्रोणीद्रोणाढकंप्रस्यात्कुडवश्चपलंविदु॥६२॥ शाणकोमाषकश्चैवयथापूर्वंचतुर्गुणाः॥वीतरागोजिनःप्रोक्तोजिनोनारायणस्मृतः॥६३॥कन्दर्पोपिजिनश्चैवजिनःसामान्यकेवली॥६४॥ जयंतीनगरीप्रोक्ताजयंतीचटकानुजाः जयंत्योषधिभेदस्याज्जयंतीशक्रसंभवा६५ रोहितंशक्रकोदण्डोरोहितोमत्स्यपुङ्गवः॥ रोहितोलोहितोवर्णोमृगराजस्तुरोहितः॥६६॥ धातकीप्रोच्यतेधात्रीधात्रीचामलकीतथा॥ धात्रीवसुंधराज्ञेयाधात्रीस्यात्स्तनदायिनी॥६७॥वीणादण्डःप्रवालस्यात्प्रवालःपल्लवःस्मृतः॥ प्रवालोविद्रुमःप्रोक्तःप्रवालःसवलोभजः॥६८॥ तालःकालःक्रियामानंतालःपातालुःभिध्यते॥ वृक्षभेदःस्मृतस्तालस्तालःकरतलध्वनिः॥६९॥ काष्ठानिशाककुपकाष्ठाकाष्ठाप्रोक्तावसुंधरा॥ काष्ठाकालविशेषःस्यात्काष्ठदारुनिगद्यते॥७०॥ वृक्षपत्रंपलाशस्यात्पलाशोराक्षसःस्मृतः॥पलाशोहरिणोवर्णपलाशःपाशउच्यते॥७१॥ सत्रंगृहधनंसत्रंसत्रंसच्चरितंमतम्॥ सत्रंनामायुधंप्रोक्तःसत्रंदानंसमीरित॥७२॥ कल्यसकुशलःकल्पःकल्पोज्ञेयोनिरामयः॥ कल्पःकालविशेषश्चकल्पंमद्यंचकीर्तितं॥७३॥ विष्टरोवर्हिषोमुष्टिर्विष्टरोज्ञेयमासनम्॥ विष्टरोद्रुमविशेषश्चविष्टरःक्रतुरेवच॥७४ साभासमितिरित्युक्तासमितिःसंयुगावनी॥ समितिःसमयोज्ञे

यः संग्रामसमितिर्मतः ॥ ७५ ॥ शितोवृषःशितःशुक्लःशितरजतमु
च्यते ॥ शापकोपिशितोज्ञेयः शितोदैत्यपुरोहितः ॥ ७६ ॥ चित्रकं
तिलकंप्रोक्तंचित्रकःस्यात्पदोमतः ॥ चित्रकोमूर्खराजिश्चचित्रकोप्य
न्तरोगरः ॥ ७७ ॥ बलोहलीवलंसैन्यंबलंसत्वंबलौषधी ॥ रत्नज्यो
तिर्बलोदैत्योबलालक्ष्मीर्बलामही ॥ ७८ ॥ परिग्रहोद्विजग्राहः से
न्येपृष्ठेपरिग्रहः परिग्रहोनुबंधःस्यात्सतक्षात्रेपरिग्रहः ॥ ७९ ॥ कुमा
त्रकः कदम्बःस्यात्कदम्बःसर्षपःस्मृतः ॥ कदम्बोवृक्षभेदश्चकदंबे
निर्गुणःपुमान् ॥ ८० ॥ प्रियकोबीजसारश्चप्रियकोद्रुपिचित्रको ॥
प्रियकःप्रियकोपिस्यात्प्रियकोमुक्तिकोव्रती ॥ ८१ ॥ अक्षोविभी
तकोवृक्षःपाशकोक्षोक्षमिन्द्रियम् ॥ अक्षोरायणिरित्युक्तःकल्प
मक्षन्तुनिम्नगम् ॥ ८२ ॥ चक्रःपक्षिविशेषश्चरथाङ्गंचक्रमायुधं ॥
चक्रंराज्यंचसंघंचचक्रंव्यावर्तनमतम् ॥ ८३ ॥ सत्यसंधःखरोज्ञे
यःखरोपिपुरुषोमतः ॥ खरोरासभइत्युक्तोव्यवहारेखरःशठः ॥ ८४
कृषिर्गोत्रविशेषःस्यात्कृषिःकालःकृषिःकपिः ॥ कृषिराढकइत्युक्तः
कृषिर्वैखानसोमुनिः ॥ ८५ ॥ अपत्येचपृथिव्यादौकालेतीतेचराक्षसे ॥
प्राप्तेप्राणिनिकीनाशेभूतशब्दोनिगद्यते ॥ ८६ ॥ शरभोष्टापदोज्ञे
यःस्वर्णमष्टापदंस्मृतम् ॥ अष्टापदंशारिफलंकृमिजातिरुदा
हृतः ॥ ८७ ॥ वालःकेशेजलंवालंवालंकाशतृणंस्मृतम् ॥ वा
लोमूर्खःशिशुर्वालोवालोवेमउदाहृतः ॥ ८८ ॥ वालकःखेचरो
व्याघ्रोवालकःपृथुकःस्मृतः ॥ वालकंगंधद्रव्यंचजटाजूट
श्चवालकम् ॥ ८९ ॥ जातिःस्यात्सहजाख्यानंमालतीजातिरुच्य
ते ॥ गोत्रादिजन्मजातिःस्याज्जातिर्वल्लीतिकथ्यते ॥ ९० ॥ गोवि
षाणेफणाज्ञेयाभुजङ्गमशिरःफणा ॥ फणाजटाफणाकृष्णाफ
णामश्यानकुण्डली ॥ ९१ ॥ तिलकोवृक्षभेदश्चतिलकंचित्रकंवि
दुः ॥ तिलकंलोमसंज्ञास्यात्प्रधानेतिलकंमतम् ॥ ९२ ॥ गंध
र्वोदेवजातिःस्याद्गंधर्वोहितुरंगमः ॥ गंधर्वश्चस्मृतोगानोगन्ध

वोमृगपुंगवः॥९३॥ शृङ्गंप्रधानमिच्छंतिशृंगश्चशिखरंविदुः॥
शृंगंविषाणमित्याहुःशब्दकोशविचक्षणा॥९४॥ कांतारकाननं
प्रोक्तंकांतारःपाकशासनः॥इक्षुभेदश्चकांतारःकांतारोदुर्भरो
दरः॥९५॥ करणंकारणंविद्यात्क्षेत्रेकरणमिष्यते॥करणोजा
तिभेदःस्यात्करणानींद्रियाणिच॥९६॥स्यामारात्रिर्द्रिषत्स्यामा
स्यामास्त्रीमुग्धयौवना॥स्यामाप्रियंगुराख्यातास्यामास्याद्द
दूदारिका॥९७॥सारंगश्चातकःख्यातःसारंगःकुंजरोमतः॥सारं
गोभ्रमरोज्ञेयःसारंगोहरिणोमतः॥९८॥सारंगःपातकोज्ञेयःसा
रंगोवैष्णवंधनुः॥सारंगःपर्वतश्चापिसारंगोदीपउच्यते॥९९॥
शुभासुधाशुभासत्यास्नुहीक्षीरशुभामता॥शुभश्रेयःशुभाशोभा
शुभाख्याताहरीतकी॥१००॥गुरुःपितागुरुर्ज्येष्ठोगुरुःसुरपुरो
हित॥दुर्भरोपिगुरुःप्रोक्तोगुरुःशिष्याभिषेचकः॥१॥वाल्हीकं
हिंगुराख्यातंवाल्हीकंकुंकुममतम्॥वाल्हीकंस्याज्जनपदोवा
ह्लीकाश्चाश्वजातयः॥२॥खर्जूरःफलभेदःस्यात्खर्जूरंरजतंमत
म्॥खर्जूरःक्षुद्रजातिःस्यात्खर्जूरोग्रहणाधिपः॥१०३॥पुण्डरीकः
स्मृतोव्याघ्रःपुण्डरीकःकमण्डलुः॥पुण्डरीकःसितोवर्णःपुण्डरी
कंसरोरुहम्॥४॥इतिश्रीकाश्मीरामन्नायेमहाक्षपणकविरचितेने
कार्थध्वनिमञ्जर्याश्लोकाधिकारःसमाप्तः॥ अर्द्धद्वारेषुशय्या
यांतल्पशब्दोविधीयते॥वाराश्वश्चौगृहेस्थानेधिष्ण्यमाहुर्मनी
षिणः॥५॥ तटोवप्रःपितावप्रोवप्रःकेदारइत्यपि॥व्यालःसर्पोवि
षेव्यालोव्यालोदुष्टश्चतुःपथः॥६॥मोचाशाल्मलिराख्यातामो
चातुकदलीमता॥कक्षातुभवनान्तर्भूमेखलागजरज्जुषु॥७॥सं
क्षेपेभक्तशिकृथेचतुच्छधानेपुलाकवाक्॥पक्षेगुरुतिमासा
र्द्धेपक्षशब्दोनिगद्यते॥८॥मास्याषाढेविशुद्धेग्नौशुक्लेशुपद्दते
शुचिः॥शक्रेपिवर्धकेमेघेमत्तनागेघनाघनः॥९॥अभिख्येति
समाख्याताकीर्तौकांतौचनामनि॥रम्भादेवाङ्गनाप्रोक्तारंभा

लुकदलीमता॥१०॥वृक्षभेदेकरीरस्यात्घटेवंशांकुरेपिच॥दे दे
दारेषुकेदारेक्षेत्रंवृक्षौचकीर्त्यते॥११॥निर्यूहोनिर्गतापीड।नि
र्यासद्वारभूमिषु॥अविशब्दोरवौमेषेपर्वतेपिनिगद्यते॥१२॥मृ
गपर्वतदैत्येषुनिकृष्टेपिचसम्वरः॥घनोघनेचदर्भेचगन्धरेगद
नेपिच॥१३॥न्यायेतुल्येविधौकालेवित्तेदण्डेचकल्पवाक्॥आ
लोलित्वल्लवान्देहेमनोयत्नधृतिष्वपि॥१४॥पर्याप्तौशिक्षितेपु
ण्येक्षेमेचकुशलध्वनिः॥प्रत्ययःशपथेछिद्रविश्वासेसत्यहेतु
षु॥१५॥पटःपक्ष्मपरित्राणेक्रयवस्तुप्रतिष्ठयोः॥दोषेचापगमे
दण्डेस्याद्व्ययदूतिश्रुतिः॥१६॥प्रभावेतेजसिस्थानेधामशब्दो
निगद्यते॥ज्ञातावात्मनिचात्मीयेधनेस्वाख्याप्रवर्त्तते॥१७॥
चूडाख्यामृतयंत्रायोच्चानामायोत्कटारिषुपरिच्छेदेप्रमाणे
चमात्राख्यापरिकीर्तिता॥१८॥दूडावर्षेचपानीयेभूमौवाकूप
सरेमता॥साधुसत्वाप्रसस्येषुश्रेष्ठेसदितिचध्वनिः॥१९॥प्रधा
नेराजलिंगेचककुदाख्याप्रकीर्तिता॥परमंडनयोर्निष्कोनिष्कोदीना
रुरुक्मयोः॥२०॥पुयुत्सोत्सङ्गयोरंकःस्यादंकेलेख्यलक्ष्म
णे॥त्रिशिरस्केनरेनीरेकवंधःखेचरेपिच॥२१॥मेरौवृक्षविशे
षेचवंशशब्दस्तुकार्मुके॥अक्षिरोमस्मृतंवर्त्मवर्त्ममार्गःप्र
कीर्तितः॥२२॥वर्ष्मदेहप्रमाणेस्याद्वर्ष्मदेहश्चकथ्यते॥दाया
दोवान्धवःप्रोक्तोदायादस्तनयोमतः॥२३॥विग्रहःसमरेभेदे
विग्रहोवपुरुच्यते॥प्रकोष्ठःकूर्परस्याधःप्रकोष्ठोद्वारकोष्ठके
॥प्रोक्तेवितानमुल्लोचवितानःशून्यउच्यते॥सतीदाक्षायिणी
देवीसुचरित्रावलासती॥२५॥वधूर्नारीवधूर्भार्यावधूःपुत्रव
धूरपि॥रक्षःकशिपुराख्यातःप्रावारःकशिपुर्मतः॥२६॥आड
म्बरोगजारावस्तूर्यनादश्चकथ्यते॥कपर्द्दोहरजटाजूटःस्यात्क
पर्दस्तुकामिनी॥२७॥तूवरोनिर्विषाणोगौर्निस्त्रीशस्तूवरःपुमा
न्॥पापीयांसोनिशंसाःस्युर्निशंसावन्दिनःस्मृताः॥१२८॥

शारदस्तु शरत्कालःस्याद्वृष्टस्तु शारदः॥उपह्वरं रहस्यानं स
मीपंस्यादुपह्वरम्॥२९॥प्रस्वेदोपि निदाघःस्यान्निदाघोग्रीष्मउ
च्यते॥कश्मलःस्यात्पिशाचेपिकश्मलोमोहउच्यते॥३०॥केतु
र्ग्रहविशेषश्चध्वजेचैवउदाहृतः॥अवद्वाकथ्यतेरीढारीढागति
रपीष्यते॥३१॥वर्द्धनंछेदनेप्रोक्तंवर्द्धनंवृद्धिरुच्यते॥कशेरुः
कज्जलेकन्देपृष्ठस्यास्थ्निकशेरुका॥३२॥निवातमाश्रयंविर
न्ध्राद्यभिन्नकवचंतथा॥कीनाशश्चकपर्दस्यात्कीनाशोयम
कर्षको॥३३॥नागोवृक्षविशेषःस्यान्नागोवारणपन्नगौ॥कुलं
संघंकुलंगोत्रंशरीरंकुलमुच्यते॥पूगःपूगीफलंप्रोक्तंतथापूग
कदंबकम्॥ज्ञेयाःसुमनसोदेवाःकुसुमानिचसज्जनाः॥३४॥
कुसुमंपुष्पमित्याहुःकुसुमंरजउच्यते॥धवःपतिर्धवोमर्त्योवृ
क्षजातिर्धवोमतः॥३५॥त्र्यम्बकस्ताम्रधातुस्यात्त्र्यंबकश्चम
हेश्वरः॥शिफाशेफालिकाज्ञेयाशिफाशाखाशिफाजटा॥३६
पुण्यंसुविहितंकर्मपवित्रंपुण्यमेवच॥खलोनीचःखलोराशि
खलःपिण्याकएवच॥३७॥शालाश्लाघाशिलाशालाशाला शा
खाचवेश्मनि॥माल्यंमालाशिरोमाल्यंमाल्यंमालउदाहृतः॥३८॥
राढादेशविशेषश्चराढाशोभाविधीयते॥पलंमांसंपलंमानंपलो
मूर्खःपलंतुला॥३९॥आलिःसहचरीज्ञेयापंक्तिरालिरुदाहृतः
॥दलमर्द्धन्दलंपत्रंदलंहस्तादिसाधनम्॥४०॥आजिःस्यात्स
मभूभागःसंग्रामोप्याजिरुच्यते॥प्रतिज्ञासंगरोज्ञेयःसंग्रामः
संगरोमतः॥४१॥उलूकःपुरुहूतःस्यात्पुरुहूतःपुरन्दरः॥आ
तंकेगजरेकुन्तेमृत्युःस्यान्मरणेपिच॥४२॥शपाविद्युत्यविशं
पाशंपाशंखध्वनिर्मतः॥उपर्यंभोधरेस्वर्णेविदुरभ्रंविपश्चितः॥
४३॥निवृत्तावभिधेयेर्थोधनेप्रोक्तःप्रयोजने॥क्रतौक्रोधेतथा
दैन्येमन्युशब्दप्रचक्षते॥४४॥बहुलाकृत्तिकाज्ञेयागावश्च
बहुलामता॥प्राध्वंबंधनमित्युक्तंप्राध्वं पकेचसूरिभिः॥४५

हरिणः पांडुरो वर्णः शारंगो हरिणो मतः॥ करटः कातरो ज्ञेयः क रटो ध्वांक्ष उच्यते॥४६॥ कर्करेटुः स्मृतो गृध्रः कर्करेटुरमर्षणः॥ सौधाव यव विज्ञान गमनेषु कला मता॥४७॥ तुषारः सुद्रपाषा ण स्तुषारः शीत उच्यते॥ अमृतं वारि विज्ञेयं देवभोज्यं तथा मृतम्॥४८॥ कुन्त्या भूमि समाख्याता कुन्त्या कुन्तकदम्बकं॥ पणे क्षेकितवे द्यूते दुरोदर इति स्मृतः॥४९॥ दीप्तौ दृष्टौ च ता रा सु ज्योतिः शब्दो विधीयते॥ रोगा तो भाग्य मूढाल्पा मंदाः प्रोक्ता १ विचक्षणैः॥५०॥ शास्त्रे प्रमाणमिच्छंति स्थितौ हेतौ च कोविदाः॥ मणिः कलक्षुरो ज्ञेयो मणिको मणिरुच्यते॥५१॥ विषं पानीयमि त्युक्तं विषमप्यं तरोरगः॥ वाजमन्नं गरुह्यान्जो वाजं पीयूषमिष्य ते॥५२॥ व्रजो गोष्ठं व्रजो मार्गो व्रजः संघो व्रजो गणम्॥ वीर्यं शुक्रं बलं वीर्यं वीर्यं वीजमुदाहृतम्॥५३॥ नक्षत्रस्य मघा नाम कुन्द स्य कलिका मघा॥ द्विजिव्हः सूचको ज्ञेयो द्विजिव्हस्तु भुजंगमः॥ ५४॥ विज्ञेयं शयनं शय्या शय्या पुस्तक संचयः॥ तरसं मास समाख्या तं तरसं बलमुच्यते॥५५॥ वारुणी मदिरा ज्ञेया पश्चिमा दिक्च वा रुणी॥ मन्दुरा वाजि शाला स्यादावासोपि च मंदुरः॥५६॥ सुनृतः शि क्षितो मर्त्यः सुनृतं सत्य वहूनृतः॥ कीकसो वानरो भिक्षुः कीर्ति तं चा स्थि कीकसम्॥५७॥ रोमंथः स्यात्पशू द्गारो रोमन्थः कीटवर्त्तनम्॥ हरिद्रा रजनी प्रोक्ता रजनी च विभावरी॥५८॥ परिघः परिघातः स्या त्परिघो दंड उच्यते॥ धरा पृथिवी धरा धारा धरः शैलो धरा नृतिः॥ मूले कन्दः किले कन्दः कंदो वारिद उच्यते॥ करो हस्तः करो रश्मिः करः कर्षक वेतनम्॥५९॥ हूंहे दुंदुभिरक्षे च दुन्दुभिः स्याच्च थानकः ॥ प्रोक्तं विपिनमुद्यानमुद्यानं गमनं स्मृतम्॥६०॥ वर्द्धनी च घटी ज्ञेया वर्द्धनी तृण कूर्चिका॥ कुंकुमं रुधिरं ज्ञेयं रुधिरं क्षतजं स्मृतम्॥६१ नंदनः सज्जनः पुत्रो नंदनं स्वर्गवाटिका॥ मानसं चित्तमित्युक्तं मान सं त्रैद संसरः॥६२॥ धावनं शोधनं प्रोक्तं धावनं शीघ्रवर्तनम्॥९

स्यंदनाख्याद्रुमेशावेस्यन्दनोरथउच्यते॥६३॥तुरायणःसमःस
ङ्गोक्तिपाहीनस्तुरायण॥परायणंरिपोस्थानंतत्परश्चपरायणः॥
॥६४॥करिपृष्ठेकुलेवेणोवंशाख्याकविभिःस्मृता॥जटाजूटेशिखं
डोक्तिःकलापेपिशिखंडिन॥६५॥शिष्टभाजनदेहेषुपात्रशब्दःप्र
वर्त्तते॥पादत्राणेदलेपक्षेसैन्यवस्त्रनिपक्षवाक्॥६६॥द्रव्येपिप
रिवारेपिकृपणेपिचकोशवाक्॥हंसेगनोगरुडेचन्द्रेद्विजराजइति
ध्वनिः॥६७॥कैवर्तेपिचकेवर्तःकैवर्तशलिलेचरे॥पिप्पलाख्याज
लाम्बत्थवस्त्रेकैवर्तेवस्तुषु॥६८॥करवीरोश्वमारःस्यादंगुष्ठंकर
वीरक॥करीणांबधनस्थानंवारिवारिजलंमतम्॥६९॥प्रचुरंभू
रिविज्ञेयंभूरिकांचनमेवच॥सूदःस्यात्सूपकारश्चसूदोज्ञेयःकु
टुबिकः॥७०॥भषकोदुर्ज्जनोज्ञेयोभषकःशरमासुत॥सूतो
भास्करइत्युक्तःसूतःसारथिरुच्यते॥७१॥प्रतिरोधकस्तुसौध
स्याद्दुर्ज्जनःप्रतिरोधक॥सौवीरश्चविरोधःस्यात्सौवीरंकंजिकं
मतम्॥७२॥दौर्मनस्यंघृणाप्रोक्ताघृणाचकरुणामता॥भंगः
पलायनंवीचिर्भंगःसस्यचभंजनम्॥७३॥तीक्ष्णतीव्रंसमा
ख्यातंतीक्ष्णलोहमुशंतिच॥मार्ग्गणःपावकोज्ञेयोमार्गणोपि
शिलीमुख॥७४॥भ्रूकुटीसुकरश्रोक्तोभ्रूकुटीचऋषीवलः॥मृणा
लंविशिनीमूलम्मृणालेचजलाकुलं॥७५॥काव्यातुपूतनाज्ञे
याकाव्यंग्रंथनिबंधनं॥ह्रस्वदीर्घप्लुतज्ञेयंप्लुतंपित्तव्यथाकृतिः
॥७६॥रुक्मंहेमविजानीयाद्रुक्मंरजतमुच्यते॥उत्पलंनलिनंप्रो
क्तंउत्पलंकुष्ठमुत्तमम्॥७७॥वसुराचालनीप्रोक्तावसुरापल्लभा
स्मृता॥रजतेकलधौतंस्यात्कलधौतचकांचने॥७८॥प्रधानंप्र
कृतिःस्थानंप्रधानंविदुरुत्तमम्॥चक्रमप्यरविंदःस्यादरविंदःस
रोरुहम्॥७९॥मृगालोजंबुकोभीरुःमृगालोदानवोमत॥विद
श्चामरुत.प्रोक्तामरुतोपिसमीरणाः॥८०॥कुंडलमंडलंज्ञेयंकुं
डलंकर्णभूषणं॥प्रतिबंधःकुलाधारःप्रतिबंधोवलक्रिया॥८१॥

वर्त्तिर्दीपशिखासूत्रं वर्त्तिर्नेत्रांजनोचितम्॥ धुम्याटश्च कलिंगः स्यात्कलिंगोदेशउच्यते॥८२॥ शैलेतृणविशेषेर्केत्रिषुगर्म्मुदिमिध्वनिः॥ वाल्मीकस्तुसमीकस्याद्वाल्मीकोवाग्विसारदः॥८३॥ सामजः कुंजरोद्भेदः समाजः सामजोमतः॥ वाजिकापक्षिजातिः स्याद्वाजिकानीलमक्षिका॥८४॥ सारसोलक्ष्मणः प्रोक्तोलक्ष्मणोराघवानुजः॥ लक्ष्मास्यात्कंदजातिस्यात्चिन्हंलक्ष्मचलक्ष्मणं॥८५॥ शंकरेवृषभेछन्दोविशेषेशांकरम्मतम्॥ कंजः केशेनिधौ कंजं कंजेपीयूषपद्मयोः॥८६॥ इतिश्रीकाश्मीराम्नायेमहाक्षपणकविरचितेनेकार्थध्वनिमजर्यामर्धश्लोकाधिकारः समाप्तः॥ अथपादाधिकारमाह॥ राजाचंद्रोनृपोराजापयःक्षीरंपयोजलं॥ मित्रोभानुःसुहृन्मित्रंदरंछिद्रंदरोभयं॥१॥ श्रीकंठः स्थाणुर्हरच्छागाच्युताग्रजे॥ गोविंदौहरिगोसंख्यौशिवकृष्णौवृषाकपि॥२॥ शरीरोत्सेधयोः कायः संख्यावधिप्रतिज्ञयोः॥ तेजःपुरीषयोर्वर्चः सौवर्चोभक्तरक्तयोः॥३॥ सरित्समुद्रयोः सिन्धुशालः प्राकाररक्षयोः॥ चातकाल्पयोःस्तोकंपापव्यसनयोरघम्॥४॥ पिपाशालोभयोस्तृष्णाभुवनंलोकतोयोः॥ कारोवधेनिश्चयेच वाडवोवन्हिविप्रयोः॥५॥ शष्पंवालतृणंप्रोक्तंदारुकाष्ठंनिगद्यते॥ शैशवंदारकेवाल्यंकिंकिनीक्षुद्रघंटिका॥६॥ संध्यावमद्यपोः कस्यंधरोधूर्तेचपर्वते॥ निस्त्रिंशौखङ्गपापिष्टौभृंगबाणौशिलीमुखौ॥७॥ सुरमीनावनिमिषोवाष्पउष्मातथाश्रुवा॥ ओघः पुरोघवेगश्चवनंकाननमंवुच॥८॥ इलाभूमिर्मतागोश्चसद्वाचितंचनामच॥ शैलोद्रिरंशुमानिंद्रोभानुर्भानुरहस्करः॥९॥ भषकोदुर्जनः प्रोक्तोभषकः सरमासुतः॥ वृक्षजातिगजेपीलूषडौरोगमागणौ॥१०॥ मुकक्रोष्टौचकरभौद्वावौक्रंदनविभ्रमौ॥ वनारणयानलौदावौजीमूतौमेघपर्वतौ॥११॥ वल्लवौसूदगोपालौचिकुरौकेशचंचलौ॥ मयउष्ट्रश्चगंधर्वोलक्ष्मीर्माचनिगद्यते॥१२॥ ९

कृपानीयंशिरप्रोक्तंनिहारमिदृशीतले॥अरिष्टपिष्टकोकल्कोच
त्रौदानववैरिणो॥१३॥पंगूपस्मारगोशोणोअम्बरेव्योमवाशशी
॥उदारख्योमरुदूदोन्यग्रोधौवटकामुको॥१४॥ध्वांक्षकाकोव
कोध्वांक्षःनगःशैलोनगोद्रुमः॥खलोदूस्वःखलःक्रूरःक्षितिःपृथ्वी
क्षितिःक्षय.॥१५॥क्षयंगेहक्षयोह्रास श्रमःखेद.श्रमःक्रिया॥कं
ठोध्वनिर्गलःकण्ठःप्रहिःकूपप्रहिःसरः॥१६॥दरेचशूकरेकोलः
कलि-कलहकालयोः॥कांड.शरोजलंकांडंघोरस्यादभिसारक-
॥१७॥शशांकस्वर्णयोश्चंद्र.करिःशूकरलोहयो.॥वर्हिर्दर्भेजलंब
र्हिर्लोङ्लंदलमिष्यते॥१८॥निमित्तहृदयोर्हेतुर्हरौवज्रमहेश्व
रौ॥कश्मीरप्रशुकोकीरौवीरौविक्रमवान्धवौ॥१९॥कौशिकोवा
सवोलूकौसायकौवानमार्गणौ॥ध्वान्ताचलौमतौविन्ध्यौशिखि
नौबर्हिपावकौ॥२०॥धीरौसात्विकधीमन्तौवरौश्रेष्ठहुताशनौ॥
उत्संगसुकरौक्रोष्टौवत्सौतर्णकपुत्रकौ॥२१॥कान्तानातपयोः
छायादयाहिंसानुकंपयो॥द्रुमोवृक्षेपुशैलेषुध्रुवौनक्षत्रनिश्च
यो॥२२॥संघातेपूरणोपूरःसूरौसूर्यनरेश्वरौ॥मकरःकोमलेका
व्येसमरोयुद्धसंघयोः॥२३॥पतंगौसलभानंतावकौस्फटिकभा
स्करौ॥कार्य्यंशुद्धेतथाकृत्येवभ्रूनकुलपिंगलो॥२४॥स्पष्टप्र
ह्रौस्मृतौव्यक्तोदीप्तिश्चेच्छातथारुचि॥शुद्धोकार्येचकोपीनं
संज्ञाख्येनामचेतने॥२५॥मधुरौचप्रियस्वादौशम्भूब्रह्ममहे
श्वरौ॥नित्यंस्वंचनिजंप्रोक्तवलदीप्तीतथौजसी॥२६॥हायनंवा
र्षमोजश्चदेतीशस्त्राच्छिषीमते॥आसासद्मेककुप्प्रोक्तास्तनमे
घोपयोधरौ॥२७॥अभिरूपेबुधेकान्तिर्घ्यामिस्वसृकुलस्त्रियोः
॥उदयाधिगमोप्राप्तौवसुसूर्योविभावसू॥२८॥वृजिन मलिने
पापेप्रज्ञासंबुद्धिचिन्हयो॥समर्थेधिकृतःध्यक्षोवीर्योद्योगो
पराक्रमो॥२९॥वराहोमूर्खकेभीरौप्लवंगःकपिभेकयोः॥यज्ञ-पू
जाचदानञ्चदृष्टिरसितश्यामतो॥३०॥चीवरंवल्कलेवस्त्रेकृकष

णेठतथोदरे॥पार्थस्त्रिश्रवणेकर्णःसूनुःपुत्रेतथानुजे॥३१॥कुस्था
नसमरेमत्स्येस्तूपंमूर्तेचटुम्बरे॥अवटाख्यौकूपगर्तौदन्तविप्रौ
तथाद्विजौ॥३२॥असत्यप्रियोल्यलीकौचवचोवाक्यंचगीर्मता
॥अंतेवासीतिशिष्येचनापितेपितथास्मृतः॥३३॥अंतेवासीग
णानोचनानाशब्दार्थसारणे॥उपान्यस्यतसौभाग्यंपठतांशृ
ण्वतामपि॥३४॥ इतिश्रीकाश्मीरम्नायेमहाक्षपणकविरचिते
नेकार्थध्वनिमंजर्यापादाधिकारःसमाप्तः॥ ॥श्रीरामचंद्रायनमः

॥अथहारावलीलिख्यते॥

श्रीगणेशायनमः

श्रीरत्नयोगिन्येनमः॥भुजगपतिविमुक्तस्वच्छनिर्मोकवल्ली
विलसितमनुकुर्वन्यस्यगंगाप्रवाहः॥शिरसिसरसभास्वन्मा
लतीदामलक्ष्मीलपयतिहिमगौरःसोस्तुवःसाध्यसिद्ध्यै॥१॥
कल्पावसानसमयेस्थितयेकवीनादेहांतरंकिमपियासृजति
प्रसन्ना॥यस्याःप्रसादपरमाणुरपिप्रतिष्ठामभ्येतिकामपिन
मामिसरस्वतींताम्॥२॥निर्मत्सराःसुकृतिनःखलुयेविविच्य
कर्णेगुणस्यकणमप्यवतंसयंति॥येषांमनोनरमतेपरदोषवा
देतेकेचिदेवविरलाभुविसंचरंति॥३॥मुक्तामयातिमधुरामसृ
णावदातच्छायाधिरागतरलामलसद्गुणश्रीः॥साध्वीसतांभ
जतुकंठमसौप्रियेवहारावलीविरचितापुरुषोत्तमेन॥४॥कि
न्नैवसंतिसुधियामभिधानकोशाःकिंतुप्रसिद्धविषयन्यवहा
रभाजः॥गोष्ठीषुवादपरमोहफलास्तकेषांहारावलीनविदधा
तिविदग्धिमानं॥५॥संकेतमेवगणयंतिपरंविदग्धावाचांविद
ग्धिमनिमज्जतियस्यलोकः॥गोष्ठीषुयःपरमशाब्दिकदुर्गमासु
दुर्बोधशब्दगतसंशयमुच्छिनत्ति॥६॥आख्याधशब्दतःश्लो

केरथैरातलिनात्ततः॥शब्दाःपादैर्विबोद्धव्याःअनेकार्थत स्ततः॥७॥ ॥विषमनयनशंकूचंद्रमौलिर्भगालीवृषभगतिगणेशौरेरिहाणोवृषांकः॥त्रिपुरदहनशूलिस्थाणुखट्वांगिदिप्रियतमशितिकंठाभर्म्यकल्माषकंठौ॥१६॥८॥शतधामाचतुष्पाणिःपृश्निगर्भोगदाग्रजःगदीकौस्तुभवक्षाश्चपांचजन्यधरोच्युतः॥८॥९॥वैनतेयःपक्षिसिंहःशाल्मलीहरिवाहनः॥अमृताहरणस्तार्क्ष्योनागाशनखगेश्वरौ॥८॥१०॥खगपतंगवियन्मणिभानवोहरिभगेननिशीथकराद्वयः॥किरणमालिविरोचनहेलयोदिनमणिस्तरणिश्चदिनप्रणीः॥१५॥११॥श्रुतश्रवोनुजःक्रोडोमंदश्छायासुतःशनिः॥सप्तार्चिर्नीलवसनःपातंगिःक्रूरलोचनः॥९॥१२॥दाक्षायणीपतिवलक्षगुपक्षजन्मतुंगीशरात्रिमणिदर्शविपत्सुधांगः॥राजासमुद्रनवनीततमोनुदौमाग्लौरिंदुरेणतिलकोहरिरोहिणीशौ॥१६॥१३॥महामृगःपुष्करदीर्घमारुतोविलोमजिन्होजलकांक्षिसिंधुरौ॥द्विपायिस्तूर्यश्रुतिकुंभिसामजामहामदःपेचकिपद्मिपीलवः॥१४॥१४॥दर्वीकरोविषधरःश्वसनाशनोहिश्चक्रीफणाभरविषायुधदीर्घपृष्ठाः॥कुंभीनसद्विरसनौसमकोलदंष्ट्रिगोकर्णकुंडलिलतारसनाबिलाश्रयाः॥१६॥१५॥मयास्योपकृतंपूर्वमयंचोपकरिष्यति॥द्वितियःक्रियतेसंधिःप्रतीहारःसउच्यते॥१॥१६॥शेषमक्षरमालायप्रतिश्लोकक्रमेणयत्॥अन्योन्यंपकृतेश्लोकःप्रतिमालेतिसामता॥१॥१७॥नभश्वरोवायुदारुर्वनदोगगनध्वजः॥व्योमधूमोजलमसिःखतमालपयोधरः॥८॥१८॥हर्षादुत्सवकालेयदलंकारांबरादिकम्॥आकृष्यगृह्यतेपूर्णपात्रंपूर्णानकंचतत्॥२॥१९॥सुरतेकर्णदेशेषुपक्षदेशीयभा

---

षया॥ दंपत्योर्जल्पितं मंदं मन्मनं तद्विदुर्बुधाः १॥२०॥ यद्दीय

ते तु देवेभ्यो मनोराज्यस्य सिद्धये॥ उपयाचितकं दिव्यदोहदं त

द्विदुर्बुधाः २॥२१॥ नक्तं निर्गत्य यत्किंचित्शुभाशुभकरं वचः॥ श्रू

यते तद्विदुर्धीराः दैवप्रश्नमुपश्रुतिं २॥२२॥ वृंदं स्त्वकमित्याहुर्वि

दूतूलं मनीषिणः॥ ग्रीष्मह्रासं वंशफकं वातत्तूलं मरुध्वजं ६॥२३

दशेंधनो गृहमणिः स्नेहाशः कज्जलध्वजः॥ जटाज्वालो दशाक

र्षीं कथितो बहुदृश्वभिः ६॥२४॥ गोमयच्छत्रिकामाहुर्दिलीरं च

शिलींध्रकं॥ उच्छं गं च दशारोहं गोलासानपरे विदुः ६॥२५॥ हिमवा

न् १ हेमकूटश्च १ निषधो १ मेरु १ रेव च॥ चैत्रः १ कर्णी च १ शृंगी १

च सप्तैते वर्षपर्वताः॥२६॥ इति श्लोकावधिः॥ व्याधो मृगवधा

जीवो निषादः पुल्कसः प्लवः ५ वालवायजमिच्छंति वैदूर्यमणि

मुत्तमाः॥२७॥ कालग्रंथिः समाः संवत्सरमासमानो युगांसकः ५

मासो वर्षांशकः श्रामो वर्षांगः स्याद्दलगणः ५॥२८॥ मदयोगवि

धानं तु व्यस्तारं १ करिणां विदुः॥ पृष्ठवंशस्य यन्मांसं

तल्पनं १ तस्य चक्षते॥२९॥ कर्णवेधनिका प्रोक्ता नालिके १ ति

विषाणिनां॥ प्रवेष्ट १ मंतःस्वेदानां दंतमांसं विदुर्बुधाः ३०॥ कुमा

रभृत्या १ गर्भिण्याः परिचर्याभिधीयते॥ नवोढावस्त्रमानंदप

ट २ मिच्छंति सूरयः॥३१॥ कर्णीसुतो मूलदेवो मूलभद्रः कुलांकुरः॥

---

रस्य ९।१२। चंद्रमसः १६।१३। गजस्य १४।१४। सर्पस्य १६।१५। प्रत्युप

कारार्थकृतसमंजसः १।१६। अंत्याक्षरक्रमेण श्लोकपाठस्य १।१७। मे

घस्य ८।१८। दर्पवस्त्राद्याकर्षणस्य २।१९। दंपत्योः शनैः कथनस्य १।२०। इ

ष्टार्थं देवेभ्यो दीयमानद्रव्यस्य २।२१। आकाशवाण्याः २।२२। आकाशे उ

ड्डीयमानस्तूलस्य ६।२३। प्रदीपस्य ६।२४। गोमयछत्रिकायाः ६।२५। सप्त

वर्षपर्वतानां प्रत्येकमेकैकं।२६। व्याधस्य ५ वैदूर्यस्य २।२७। संवत्सरस्य

५ मासस्य ५।२८। करिणां मदयोगविधानस्य १ गजपृष्ठमांसस्य १।२९।

अर्धश्लो.

॥४॥ ज्येष्ठामूलीयमित्युक्तिमासमाषाढ पूर्वजं १॥३२॥ नित्यकर्मे समाचारनिष्ठुरत्वेकटुकता॥१॥ वीणानुबंधो धीमद्भिरूपनाहो २ ऽभिधीमते॥३३॥ स्यात्सालिकाकुंतलिका २ दध्यादिच्छेदनीतु पा॥ वैशाखोदधिचारः स्यात्तक्राटःकरघर्षणः ४॥३४॥ स्यादाषाढभवो भौमो नवार्चिर्गगनोल्मुकः॥४॥ पंचार्चिश्चश्रविष्ठाजोज्ञ एकांगः प्रहर्षणः ५॥३५॥ द्वीदिविर्द्वादशार्चिः स्याज्जीवः आकूफल्गुनी भवः॥४॥ काव्योदैत्यपुरोधाःस्यात्षोडशार्चिर्मघाभवः ४ ॥३६॥ उपप्लुवोकचः केतुराश्लेषाभवआह्निकः ५॥ ज्योतीरथोग्रहधारो ध्रुव उत्तानपादजः ४॥३७॥ स्वर्भानुर्ग्रहकल्लोलं विदुस्त्रपिशाचकं ३॥ वनीपकोयाचनकोवसुकीदीमुखंपचः ४॥३८॥ जायमानविषाणाग्रेकराहे १ मद्विपीशिशौ॥ छेदोहस्तेनसस्यानाकटभंग १ उदाहृतः॥३९॥ जलत्राजंगमकुटीकावारीसूर्ह्कर्पटी ४॥ उष्णवारणमुत्कूटश्चक्रांगं चपुटोटजं ४॥४०॥ मुनीनीचचिताकुत्योपर्णाटजसहोटजो॥२॥ कारोत्तरश्चवीनादीप्रहिरंधूजेलांविका ४॥४१॥ जलकूपीजलाधीलीतलकंपुष्करिण्यपि ४॥ असन्नास्तमयः कश्चिदुपधूपित १ दृष्यते॥४२॥ तत्क्षणादित्यमुक्तांतुवदंत्यंगारिणीं १ दिशं॥ अगारिते १ पलाशानांकलिकानिर्गमोभवेत्॥४३॥ गांधारंरक्तचूर्णंतुसिंदूरंरक्तवालुकं ४॥ कुरत्यान्विभवान्वेषीपार्श्विकः संधिजीवकः॥४४॥

---

गजकर्णवेधिन्याः १ गजदंतमोसस्य १॥३०॥ गर्भिणीपरिचर्यायाः १ नवोढावस्त्रस्य २॥३१॥ ग्रामप्रधानदेवतायाः ४ ज्येष्ठमासस्य १॥३२॥ नित्यकर्माशक्ततायाः १ वैरानुबंधस्य २॥३३॥ दध्यादिछेदिन्या २ दधिमंथनदंडस्य ४॥३४॥ मंगलस्य ४ बुधस्य ५॥३५॥ बृहस्पते ४ शुक्रस्य ४॥३६॥ केतो ५ ध्रुवस्य ४॥३७॥ राहो ३ याचकस्य ४॥३८॥ जातशृंगस्यमद्विपीशिशो १ हस्तेनसस्यछेदस्य १॥३९॥ जलत्रायाः ४ छत्रस्य ४॥४०॥ मुनिचिताकु

अधश्वरोभवेच्चौरः कुसुमालः कुजंभलः ४॥ प्रोक्तः कारिकुसुंभ स्तु नागकेसरचूर्णके २॥४५॥ बर्बरं बर्बरीकंच बर्वरीत्यपिचे ष्यते॥ अभावात्स्त्रीपरित्यागस्तुरगब्रह्मचर्यकं १॥४६॥ यमि नांयद्व्रतंगोप्यंतत्वंजनतरंविदुः १ स्यादाचामनकःप्रोंठःकट कोलःपतद्ग्रहः ४॥४७॥ मेलांमेदामसिमणिर्मसिधानीमसिप्र सूः ५॥ बालोपरीतंतुविदुःपंचावटमुरस्कटं ३॥४८॥ नारीणां मं डलीनृत्यंबुधाहल्लीषकं १ विदुः॥ मारीचोयाजकगजोराजह स्तीमदोत्कटः॥४९॥ अलंकारसुवर्णयत्तच्छृंगीकनकं १ मतं॥ रतिलक्षंनिधुवनंसंयोजनं ३ मितिस्मृतं॥५०॥ जीमूतकुटकु ट्टीरकुट्टाराः कुंदराकरः ४॥ उद्देशोगंडकूपस्तुपर्वतस्याभिधी यते॥५१॥ वासिताधेनुकाचैववशाचकरिणी ४ मता॥ ब्रह्मा ग्रभूः क्रतुपशुःसिंहविक्रांतवाजिनौ ५॥५२॥ समुद्रगानिर्झ रिणीतलोदाजंबालिनीशैवलिनितरंगिणी ६॥ विपाठकांदे वकपत्रवाहाः पत्रीखगोवीरतरोस्त्रकंटकः॥५३॥ वर्णदूतः स्वस्तिमुखोलेखोवाचिकहारकः॥ लेखोनिबध्यतेयेनतत्र काचनकाभिधा॥५४॥ स्मारांकुमाणिमंथंचविदुःसिंधूपलंबुधा ३॥ पिशितंपललंमांसंक्रव्यमामिषमुद्धसं ६॥५५॥ पारावारम हाकच्छोमहीप्राचीरदारदौ ४॥ जिह्वादरःकीकशास्यश्वंचुम

---

स्या २ कूपस्य ५।५१। पुष्करिण्याः ४ आसन्नास्तमयस्य १।५२। तल्लक्षणादि त्यमुक्तदिशः १ पलाशकलिकायाः १।५३। सिंदूरस्य ४ पिशुनस्य २।५४। दि वाचौरस्य २ नागकेसरचूर्णस्य २।५५। बर्बरस्य ३॥ अभावात्स्त्रीपरि त्यागस्य १।५६। यतीनांगोप्यमैथुनस्य १ पतद्ग्रहस्य ४।५७। मसिधा न्याः ५ बालकपरिधानवस्त्रस्य ३।४८। स्त्रीनृत्यस्य १ राजहस्तिनः ४ ।४९। अलंकारसुवर्णस्य १ मैथुनस्य ३।५०। पर्वतस्य ४ पर्वतोच्चस्थल स्य १।५१। हस्तिन्याः ५ अश्वस्य ५।५२। नद्याः ६ शरस्य ७।५३। लिखनपत्र

त्तरुशायिनो॥७॥५६॥ इंद्रक्रीडासरःप्राहुर्नंदीसर १इतिस्मृतं॥५७॥धूमोर्णापतिरुद्दिष्टोयमोमहिषवाहनः॥३॥५७॥पयोघनोमेघकफोघनोपलोमेघास्थिबीजोदकतोयडिंभाः६शंपाचिराभाचपलाच्छटाभाह्रादिन्यधीराघनवल्लिकाच॥७॥५८॥पादालिंदीतरंडानोस्तरणिस्तारणिस्तरिः६॥किलाटःशोधितक्षीरपिंडः२सूरिभिरिष्यते॥५९॥कालायसमयस्तीक्ष्णंगिरिसारंचशस्तकं॥५॥दृष्यंगवीनंरसजंमंथजंचकलंबुटं४॥६०॥एकशफांघ्रिकंबंधमाहुर्दामांचलंबुधाः॥वेत्तास्त्रीपुंसयोश्चिन्हंसामुद्रिक१उदाहृतः॥६१॥तितिलीकाःस्थिभिर्घृतक्रीडायांचुंचुलिर्भवेत्॥वक्रालललाटगास्तिस्रोभस्मरेखास्त्रिपुंडकं३॥६२॥हालाकामालिकामंडाधीरास्यात्मदनीचमाध्वीच६॥आहुश्चषकंतुपानपात्रंपारीमप्यनुतर्षणांकवींद्राः॥६३॥कुसुंभःकरकश्चैवस्यमुरवःकमंडलुः४स्मृतः॥असहायोनर्तकश्चतालावचर१दृष्यते॥६४॥कथितःकौमुदीवृक्षोदीपवृक्षःशिखातरुः३॥कोजागरेतथासद्भिःकौमुदीचारेदृष्यते॥६५॥समुद्रगृहमित्याहुर्जलयंत्रनिकेतनं२॥प्रेतादिभिर्गृहीतोयःसआविष्ट१भ्रसन्वहिः॥६६॥हिममिंद्राग्निधूमश्चरववाष्पोरजनीजलं४॥येशिवायतनोत्सृष्टास्तेसंध्याबलयोवृषाः॥६७॥विषाक्तास्त्रहतस्याहुःपशोर्मांसंतुगृंजनं१॥धूमि

---

स्य४पत्रीबधनस्य१।५४।सैंधवलवणस्य३मांसस्य६।५५।समुद्रस्य४पक्षिण-४।५६।इंद्रक्रीडासरसः१यमस्य३।५७।मेघप्रस्तरस्य६विद्युत७।५८।नौकाया६शोधितक्षीरपिंडस्य२।५९।लोहस्य५नवनीतस्य४।६०।एकखुरयुक्तचरणबंधनस्य३स्त्रीपुरुषचिन्हवेत्तु१।६१।अस्थिभिर्घृतक्रीडाया२ललाटस्थभस्मरेखाया।३।६२।सुराया-६पानपात्रस्य४।६३।कमंडलो४असहायनर्तकस्य१।६४।दीपवृक्षस्य३कोजागरपा।६५

अर्धश्लोका

काधूममहिषी हिमसंहतिः कुहेलिका४॥६८॥पोताच्छादनमाहु
स्कवरकमथ वस्त्रकुट्टिमं कवयः॥ तंत्रविमुक्तं वासो निष्प्रवणि
निष्प्रवाणिं १च॥६९॥महाघोषं क्रयारोहं हट्टं पण्याजिरं ४ विदुः
॥ बहुमानुषसंकीर्णनिघंटं चकरांगणं॥२॥७०॥शालभंजीदा
रुगर्भाकुरंटीदारुपुत्रिका४॥कादंबिनीनवोमेघः कालीस्यात्का
लिका३पिच॥७१॥क्रोशध्वनिः क्रोशताली ढक्काविजयमर्दलः
४॥स्यात्प्रतिपत्तिः पटहोलंपापटहः२ इत्यपि॥७२॥कुकूलं काय
वलनं तनुत्रं दंशनं४ विदुः॥शिरस्त्रं शीर्षरक्षं च शीर्षण्यं शीर्षकं४
चतत्॥७३॥स्याज्जालिका लोहमयी जालप्रायांगरक्षिणी २॥
पत्नंधी पादविरजाः कोशी पादरथी ४ भवेत्॥७४॥रुचकं लवणं
क्षारं तीक्ष्णं जलरसं३ विदुः॥ज्योतिर्बीजं च खद्योतं ध्वांतोन्मेषं
तमोमणिः ५॥७५॥जलशूकरजलजिह्वौ जलकंटकवार्भटौ त
थानक्रो५॥जलनकुलजलविडालौ नीराखुजलप्लवावुद्रे५॥७६
शिशुमारो जलकपिश्च पलांगोः सिपुच्छकः ग्राहो जलकिराट
श्च नक्रराजो जलाटकः ४॥७७॥मृतकांतकश्च भीरुरेकधूर्तश
यालुवंचका भरुजः ७॥शालामृगोस्थिभक्षोग्राममृगोमंडलः क
पिलः ५॥७८॥उल्कामुखीशृगाली यादीप्तजिह्वे १ तिसामता॥
स्कंधवाहस्तु शंकश्च शृंगी गोरक्षधूर्तिलः ५॥७९॥ हेरंबः कासरश्चै

---

जलपंक्त्यार्थगृहस्य२ प्रेतादिगृहीतस्य१६६। हिमस्य४ शिवालयोत्सृष्ट
वृषस्य२।६७। विपाक्तास्त्राहतपशुमांसस्य१ कुहेलिकायाः ४।६८। पोताच्छा
दनस्य२ तंत्रविमुक्तवाससः १।६९। हट्टस्य४ बहुनरसंकीर्णहट्टस्य२।७०
काष्ठपुत्तलिकायाः ४ नूतनमेघजालस्य३।७१। ढक्कायाः४ पटहस्य२।७२
वस्त्रांगरक्षिण्याः ४ शिरस्त्राणस्य४।७३। लौहवर्मणः२ उपानहः ४।७४।
क्षारलवणस्य३ खद्योतस्य४।७५। नक्रस्य५ उद्रस्य५।७६। शिशुमारस्य
४ ग्राहस्य४।७७। शृगालस्य७ शुनः५।७८। उल्कामुखीशृगाल्याः १ शा

वरत्नाक्षः सैरिभ ४ स्तथा॥ रोमशो बहुरोमास्याद्दुरणश्च पृथूदरः
४॥८०॥ हुडिक्कस्तु बालवाह्यो वनछागो तिरोमशः ४॥ वरणो धूम्र
इरकः स्यादुष्ट्रः शृंखलकस्तथा॥८१॥ चक्रमुखः सूचिरोमाव
राहः स्थूलनासिकः ४ कंठीरवस्तु पारींद्रः केसरी गजमाचलः
४॥८२॥ नेत्रपिंडो वृषाह्वारो मेनादः कुंदम ४ स्मृतः॥ गंधाखुर्गंध
नकुलश्छुच्छुः पुंवृष ४ उच्यते॥८३॥ द्रोणो रिष्टो नालिजंघ आत्म
घोषस्तु मौद्गलिः ५॥ गोभंडीरः पंककीरो द्वापुत्री राजभद्रिका ४
॥८४॥ गंगाचिल्ली तु देवट्टी विम्बका जलकुक्कुटी ४॥ विट्सारिका
तु कुणपी गोराटी गोकिराटिका ४॥८५॥ मृगांद्रूचटको घातिपक्षी
ग्राहक मारकौ ४॥ कुलालकुक्कुटः प्राद्दुः कुक्कुभं कुदकस्वरं ४॥
८६॥ कर्कराक्षः कलादीनः खंजलेखस्तु खंजनः ४॥ प्रासादकुक्कु
टो झल्लकंठो गृहकपोतकः ३॥८७॥ ध्वांक्षपुष्टः कलकंठो मधुकं
ठः कुहूमुखः ५॥ झषाशी मत्स्यरंकः स्याज्जलमद्गुर्मणीचकः
४॥८८॥ कलविंकश्चित्रपृष्ठो गृहनीडो वृषायणः ५॥ वरंडा चित्र
पादा च चित्रनेत्रा च सारिका ५॥८९॥ मयूरश्चटको दक्षः कृकवाकु
र्निशाकरः ४॥ शतपत्रः सितापांगः प्रचलाकी च चंद्रकी ४॥९०॥
किसलयमपि तरुरागं विदुर्लता पावकं प्रवालं च॥ ५॥ कंटकसंज्ञा
स्तरुनखसितागदर्लसूचिरां किलद्रुमराः ६॥९१॥ द्रोणीदलः सू
विपुष्यो जंबूलः क्रकचच्छदः ४॥ मद्रु तिष्यफला धात्री वल्या पं

---

करादिवाहक वृषभस्य ५।७९। महिषस्य ४ मेषस्य ४।८०। नृहद्ग्रामरस्य
४ उष्ट्रस्य ४।८१। वराहस्य ४ सिंहस्य ४।८२। बिडालस्य ४ छुछुंदर्या ४
८३। द्रोणकाकस्य ५ द्वापुत्र्याख्यपक्षिण ४।८४। गंगाचिल्ल्या ४ विट्सा
रिकाया ४।८५। श्येनस्य ४ वनकुक्कुटस्य ४।८६। खंजरीटस्य ४ कपोत
स्य ३।८७। कोकिलस्य ५। मत्स्यरंगस्य ४।८८। कलविंकस्य ५ सारिका
या ५।८९। ग्रामकुक्कुटस्य ४ मयूरस्य ४।९०। नूतनपल्लवस्य ५ वृक्षकंट

अर्धश्लो

चरसा शिवा ६॥ ९२॥ सहस्रवीर्या विरजा भार्गवी मंडलीरुहा ५ प्रहर्षिणी निशाव्हा चलसा गंधपलाशिका ४॥ ९३॥ मृदुपुष्पः शूकतरुः शिरीषो विषनाशनः ४॥ वराहकाली कथितः सूर्यावर्त २ स्तु शाब्दिकैः॥ ९४॥ वज्रवल्ल्यस्थिसंहारो हस्तिशुंडी वनालिका ४॥ वनतिक्तस्त्रियांग्री ध्मातिरीटः पक्षसुंदरः ३॥ ९५ मधुपुष्पो मधूकश्च गुडपुष्पो मधुद्रुमः ४॥ वृत्तपुष्पः प्रावृषेण्यो हारिद्रस्तु हलिप्रियः ४॥ ९६॥ एला त्वचिस्सुगंधा च पुटिका चर्मसंभवा ४॥ कूष्मांडकः पुष्पफलो घनवासश्च वेष्टकः ४॥ ९७॥ वेषणः कासमर्दश्च पत्रोपस्कर ३ इत्यपि॥ ओंकोदशाली प्राचीरमो घोलिखहालिका॥ ५॥ ९८॥ कल्यवर्त्तः प्रातराशः प्रातर्भोजनमिष्यते॥ शृगालिका चडिंबं चडमरं विद्रवो ४ पिच॥ ९९॥ स्कंधफलः स्मुतुंगश्च नारिकेलः पुटोदकः ५॥ गुडदारुर्मधुतृणमसिपत्रो महारसः ५॥ १००॥ राजालुको महाकंदो मूलको हस्तिदंतकः॥ क्षुद्ररसा तिक्तगुंजा सरघा विरूपकर्कटी ४॥ १॥ क्षुद्रपत्रा च चांगेरी क्षुद्राम्ला चाम्ललोणिका ४ प्राचीनामलकं त्वंबरशामलकं ३ तथा॥ २॥ पिष्टसौरभमेकांगं श्रीखंडं मालयं ४ विदुः॥ मृगनाभिर्मृगमदो गंधशेखर ३ मित्यपि॥ ३॥ सिताभ्रं तरुसारं च वेरकं रसकेसरं॥ ४॥ कालेयं वंशकं जोंगं कालीयं वरचंदनं ५॥ ५॥ तृणसारा भृत्सुफला रंभा च कदली ४ भवेत्॥ ऊर्ध्वासितः

---

कस्य ६। ९१। केतकस्य ४ धात्र्याः ६। ९२। दूर्वायाः ५ गंधपलासिकायाः ४। ९३। शिरीषस्य ४ सूर्यावर्तस्य २। ९४। अस्थिसंहारस्य ४ लोध्रस्य ३। ९५। मधूकवृक्षस्य ४ कदंबस्य ४। ९६। एलायाः ४ कूष्मांडस्य ४। ९७। कासमर्दस्य ३ भितेः ५। ९८। प्रातर्भोजनस्य ३ भीत्या पलायनस्य ४। ९९। नारिकेलस्य ४ द्रुमोः ५। १००। मूलस्य ४ करंजस्य ४। १। आम्ललोणिकायाः ४ प्राचीनामलकस्य ३। २। श्रीखंडस्य ४। ३। कस्तूर्याः ३। ३। कर्पूरस्य ४ अगुरु इति

परारुस्यात्तथाराजपटोलकः ३॥५॥कुंकुमपीतकावेरंघुस्रणंकु
सुमात्मकं४अरकोजलकेशश्चकावारंशैवलं४विदुः॥६॥उन्म
त्तःकाहलापुष्पोवृद्दसाटलिघांटिकौ४किंशुकःकरकःपर्णी
लाक्षावृक्षःसुभीरवः४॥७॥अमंडपंचांगुलवर्धमानागंधर्वहस्त
स्त्रिपुटीफल५श्च॥रेणुःसतीलस्तृणकेतुमृत्कवीजौकिलाटी
चंततःसुपर्वा६॥८॥कचमालोमरुद्वाहोधूमोमेभःशिखिध्वजः
५॥शाखानगर१माद्दुस्तद्यदभ्यर्णपुरातरं॥९॥आदुर्जलकरंक
श्चजलजसूचिकामुखौ॥उपजिह्विकोत्सादिकाचवटिरुद्देहि
कादिवी५॥१०॥शुल्बमोदुंबरंरक्तंम्लेच्छास्यताम्रकं५विदुः॥
दुर्नामादीर्घकोषीस्यात्पंकशुक्तिःसितालिका४॥११॥आकाश
मूलीकुत्तृणंकुंभिकाजलवल्कल४॥शंबूकोजलडिंवःस्याद्दु
श्चरःपंकमंडुकः४॥१२॥आटीलकंतर्णकानांस्थलीसुक्रीडनं
मत॥यष्टिःशब्दवतीधीरैखखीरक१दृतिस्मृता॥१३॥लेखात्र
यांकितंभालंत्रिपताकं१विदुर्बुधाः॥अर्धचंद्रंकर्करेटविदुरंगु
लितोरणं३॥१४॥सिक्तजलंचगृहाम्लमवंतिसोमंतुधोदकशु
क्त५॥नग्नाटकनिर्ग्रंथकभदंतदिगंबरकानग्ने५॥१५॥कर
पात्रंजलक्रीडाप्यात्युक्षीकरपत्रिका४॥शराणांपत्ररचनाप
त्रणा१परिकीर्तिता॥१६॥पंचभद्राह्ह्यास्तेयंपंचस्वंगेषुपुष्पिता
यश्चारकोमुद्गभुजांसस्याहूल्लभपालकः१॥१७॥निगालस्थो

---

रन्यातस्य५॥४॥कदल्याः४पटोलस्य३॥५॥कुंकुमस्य४शैवलस्य४॥६॥
धूस्तूरस्य४पलाशस्य४॥७॥एरंडस्य५वंशस्य६॥८॥धूमस्य५नगरां
तिकपुरस्य१॥९॥शंखस्य३उपजिह्विकायाः५॥१०॥ताम्रस्य५पंकशु
क्तेः४॥११॥कुंभिकायाः४शंबूकस्य४॥१२॥तर्णकक्रीडनस्य१शब्दव
तीयष्ट्याः१॥१३॥लेखात्रयांकितभालस्य१गलेहस्ताधानस्य३॥१४॥कां
जिकस्य५दिगंबरयोगिनः५॥१५॥जलक्रीडायाः४शरपत्ररचनायाः१॥१६॥

अर्धश्लो॰

यअावर्त्तःसहिदेवमणि१स्मृतः॥तथावक्षसिवाहस्यश्रीवृक्ष क१उदाहृतः॥१८॥बंधःपलाशपत्राणांशीर्षेपत्रपिशाचिका॥ सुवसंतक१शब्देनउच्यतेमदनोत्सवः॥१९॥कर्वटं१द्विशतग्रा ममध्येग्राममनोहरं॥तथाचतुःशतग्राममध्येद्रोणमुखं१वि दुः॥२०॥यद्यात्रामंगलंसामतदप्रतिरथं१विदुः॥शालाप्रासाद शिखरेचंद्रशालेति१कीर्तिता॥२१॥ ॥इत्यर्धश्लोकावधिः॥ तलिनंतुच्छ२मित्याहुर्गृहाश्मागृहकच्छपः२॥खसंचारिपुरं सौ धं१रथ्यापांशुकली२भवेत्॥२२॥एकनटःस्यात्कथको२भंड श्चाटुपटुः२स्मृतः॥मक्षिकाभस्मराली२स्यात्सांमुरोदंशकः२ स्मृतः॥२३॥देवोद्यानंतुवैभ्राजं२दीपालीदीपशृंखला२॥सुकु मारेपिसोमालं२विषमेस्यपुटं२विदुः॥२४॥द्रुणहःखड्गपिधा नं२सारिणीचप्रणालिका२॥यज्ञस्थानंयज्ञवाटं२स्तृष्णाधन पिशाचिका२॥२५॥स्मृताबाल्वंगिरिर्वारुः२स्फुटिरिर्वारुशु क्तिका२॥नाटाम्रस्तिमिषःसेटु३कोमासिकातुजालिका॥२६॥ पुंजातुकःफलेलाकु२स्तृणताधनु२रिष्यते॥केरातोदोग्रेंहः२ क्षामाः३सिंघाणंकाचभाजनं२॥२७॥दर्वटोदंडवादी२स्यात् स्तेनःशंकितवर्णकः२॥प्रारंब्धिःकरिबंध२स्स्यात्कष्टस्थानंतु वारकं२॥२८॥भोगावलीवंदिपाठः२सेतुःपूरणपिंडलो२॥

---

पंचकल्याणघोटकस्य१अश्वचारकस्य१।१७।अश्वगलोद्देशस्थावर्त स्य१अश्ववक्षःस्थावर्त्तस्य१।१८।पलाशपात्राणांशीर्षेबंधस्य१मदनो त्सवस्य२।१९।द्विशतग्राममध्यग्रामस्य१चतुःशतग्राममध्यग्रामस्य १।२०।यात्राकालेसामवेदपाठस्य१प्रासादशिखरस्थशालायाः१।२१।तुच्छ स्य२पेषणशिलायाःसौधस्य२राजमार्गस्य२कथकस्य२भंडस्य२मक्षिकायाःदंशस्य२ देवोद्यानस्य२दीपावल्याःसुकुमारस्य२विषमस्य२४खड्गपिधानस्य२जलनिर्गममा र्गस्य२यज्ञस्थानस्य२लोभस्य२५दुर्वारोःस्फुटेःनाटाम्रस्य२आलिकायाः२६जीवन२

द्वेवद्रोणीदेवयात्रा२शूनाधोजिव्हिका२मता॥२९॥पालिःसमु०
स्थितश्मश्रु२र्मेरुंडोच्चलला टिका२॥रा का १दृष्टरजाःकन्यापो
टा१स्त्रीपुंसलक्षणा॥३०॥महत्तरोग्रामकूटो२मर्मरो१ऽव्यक्तनि
स्वनः॥शिवालय पितृवनं२चिताकाष्ठमठीचितिः३॥३१॥कर्ण
वंशोभवेन्मंचः२श्रीग्रहःशकुनिप्रपा२॥तांबूलदोवागुलिकः२सु
रभिःफाल्गुनानुजः२॥३२॥तांबूलरागोमसुर२स्तसवारिःरूपा
पाकः॥स्वागतंकुशलप्रश्नः२सामीचीवंदनामता॥३३॥समुद्गः
संपुटो२ज्ञेयोहयस्कंधोहयच्छटा२॥पिंडारोमहिषीपाले२मसूरे
चगभोलिकः२॥३४॥कादलीतरुणी२ श्रोक्ता क्षुरातु कथितासुधा
२॥कापिल्लिकारोचनिका२कालिकावस्करा टिका२॥३५॥कालि
काक्षीरकीटःस्यात्खंडपालस्तुखांडिकः॥२पांसुरःपीठसर्पी
स्याटुल्लुलोरोमशः२स्मृतः३६॥पूगपात्रेफस्वकं२कबंधोरुं
ड२मुच्यते॥तूलिकास्यान्नवतिका२स्थानमालस्प२मुच्यते
॥३७॥भाजनेकमठंप्रोक्तंपुण्यश्लोकोनलो२मतः॥गौरवेप्रतिप
त्तिः२स्याद्भारिःपथिकसंहतिः२॥३८॥यामकिन्यपियामिस्त्री
ह्यपिकाचोपपुष्पिका२॥जातपुत्रेविटधरो३निर्माल्यंनिर्मलं२

---

क्षस्य२धनुषः२बलवत्पुरुषस्य३काचभाजनस्य२।२७।अदडवादिनः
२चौरस्य२गजबंधनस्तंभस्य२कष्टस्थानस्य२।२८।वेदिपाठस्य२सेतोः
२देवयात्राया२उलूखलादिपंचशूनाया २।२९।सश्मश्रुस्त्रियाः२उच्च
भ्रूस्त्रियाः२दृष्टरजःकन्यायाः१पुंसलक्षणाया १।३०।महत्तरस्य२
अव्यक्तशब्दस्य१श्मशानस्य२चितायाः ३।३१।मंचस्य२पक्षिणःपा
नीयशालायाः२वसंतकालस्य२तांबूलदातुः२।३२।तांबूलरागस्य
२खड्गस्य२कुशलप्रश्नस्य२स्तुतेः२।३३।संपुटस्य२हयस्कंधस्य२महि
षीपालस्य२रहन्मसूरस्य२।३४।तरुण्याः२लेपनद्रव्यस्य२रोचनिका
याः२कृमिकायाः२।३५।क्षीरकीटस्य२मोदकस्य२खंजनघोटकस्य२

मतं ॥ ३९ ॥ द्रुमसनेमता गुंजा २ गुलुंचो गुच्छको मतः ॥ भोगावा
सो वासगृहं २ मेठो हस्तिपकः २ स्मृतः ॥ ४० ॥ मायुः पलाग्निः प
ललं ३ ज्वरः स्यादजीर्णमेतं धमिरामयश्च ४ ॥ तृप्तिश्च मोदिस्य
मुदंतिका ३ स्यात्सुत्सारिका भोगपिशाचिका ३ च ॥ ४१ ॥ भोगो
जलचरंटः २ स्यात्कणा कुंभीरमक्षिका २ ॥ वहलं बार्बटः पोत ३
स्तरालुश्चाहिपुत्रकः २ ॥ ४२ ॥ काहलस्तु महानादो २ मार्दंगपत्त
नं २ विदुः ॥ स्याद्दवित्रं तरिरथः २ पात्रपालस्तुलाधटः २ ॥ ४३ ॥ का
किनी पणतुर्यांशे १ ज्वलदंगार उल्मुकं ॥ १ ॥ अपानं च स्वभावः २
स्यान्मेजिका वासंदरी २ ॥ ४४ ॥ नीलमणिर्मसारः २ स्याद्गुंजा पा
ठहिका २ मता ॥ भार्या पाणिगृहीती च दुकूलं क्षौमं २ मुच्यते ४५
ग्रंथस्य निर्मितौ शय्या वधूठी वधुटी जनी २ ॥ वेदिचौरो माच
लः २ स्यात्कुंभिलः संधिहारकः ॥ ४६ ॥ अभ्रमु १ स्त्वभ्रनागस्य
कुमुदस्य तु पिंगला १ ॥ अंगना १ वामनस्य स्यादंजनस्यांजनाव
ती १ ॥ ४७ ॥ कपिला पुंडरीकस्यानुपमा १ सुप्रतीकस्य ॥ शेषस्य
ताम्रकर्णी १ च शुभ्रदंती १ सार्वभौमस्य ॥ ४८ ॥ सेवाचाटूक्तिरा

---

बहुरोमयुक्तस्य २ । ३६ । पूगपत्रस्य २ कबंधस्य २ चित्रलेखिन्याः २ आ
लस्यस्य २ । ३७ । पात्रस्य २ नलराज्ञः गौरवस्य २ पथिकश्रेण्याः २ । ३८ । या
मिकस्त्रियाः २ जंभायाः २ महाधूर्तस्य ३ निर्माल्यस्य २ । ३९ । गोजेति प्रसि
द्धस्य २ गुलुंचस्य २ वासगृहस्य २ हस्तिपकस्य २ । ४० । पित्तस्य ३ अंत्रस्य
४ वृत्तेः ३ सुधायाः ३ । ४१ जलवसंतारस्य व्रणस्य २ कुंभीरमक्षिकायाः २ पो
तस्य ३ नौकाजलोत्सारकस्य २ । २४ । वृहत् ढक्कायाः २ मृदंगस्य २ अरित्रस्य
२ तुलाधटस्य २ । ४३ । पणचतुर्थांशस्य १ ज्वलदंगारस्य १ स्वभावस्य २ वे
श्यायाः २ । ४४ । नीलमणेः २ गुंजायाः २ भार्यायाः २ । ४५ । पट्टवस्त्रस्य २ । ४५ ।
ग्रंथनिर्माणस्य १ नवीनस्नुषायाः २ वेदिचोरस्य २ संधिहारकस्य २ । ४६ ऐरा
वतदिग्गजपत्न्याः १ कुमुददिग्गजपत्न्याः १ वामनदिग्गजस्त्रियः १ अंजन

पादावधिः

लोकौ २ मठोगंत्री रथः स्मृतः॥ चिपिटो धान्यचमसः २ खाजिको॰
लाज उत्तुषः ३॥४९॥ अभ्यासो गुणनीयः २ स्यान्माढिः पत्रशिरा २
मता॥ भौतो देवलकः ख्यातः खेटकवसुनंदके २॥५०॥ पुरंदरा
तु सुरला २ कावेरी चार्धजान्हवी २॥ कौमुदः कार्त्तिको मासः २ सौ
भिकस्त्विंद्रजालिकः २॥५१॥ प्रहेलकं वाचनकं २ वीक्षापन्नः स॰
विस्मयः २॥ कुटलं पटलं नीव्रं ३ वीथी गृहतटी २ मता॥५२॥ सर्व
वेशी नटः प्रोक्तो २ मदाक्षेतु नटांतिका २॥ मृत्फली कुठिकः २ प्रोक्त
शालूरो वृष्टिभूः प्लुवः ३॥५३॥ स्वेदः सिप्रस्तनुरस ३ स्त्वक्सुप्येतु त्व
गंकुरः॥२॥ नवोढा नवन्नरिका २ दिक्करी नवयौवना॥५४॥ सौवर्चले
चरुचकं २ हिंगुले रक्तपारदम् २॥ रक्तोपले गैरिके च २ पारदे रस तर्क
विंदु॥५५॥ माशूकः कंबलः २ स्यातद्वेमा त्वकं डुरो वणः ३॥
कपटः पारिहार्यः स्या २ दीर्ष्यालुः कुहनः २ स्मृत॥५६॥ ऋणमो
क्षेत्रिगणनं २ लग्नके ऋणमार्गणः २॥ भिक्षाशित्वतु पैशून्यं २ मंड
पिठ्ठांधस ३ स्तथा॥५७॥ वायुकेतुः क्षितिकणः स्यादास्फाले झ
लज्झला॥१३॥ नष्टाप्तिसूत्रे लोप्त्रं स्याद्याप्ययाने शिबी रथः ५८

---

दिग्गजस्त्रिय १॥४७॥ पुंडरीकदिग्गजस्त्रिय १ सुप्रतीकदिग्गजस्त्रिय १ पु
ष्पदंतदिग्गजपत्न्या। सार्वभौमदिग्गजपत्न्या १॥४८॥ सेवनस्य ३ शकट
स्य २ चिपिटस्य २ लाजानां ३॥४९॥ अभ्यासस्य २ पत्रभंगस्य २ भूदेवसेवक
स्य २ धनवृद्धिजीवकस्य २॥५०॥ गंगाया २ कावेर्याः २ कार्त्तिकमासस्य २
इंद्रजालिकस्य २॥५१॥ प्रहेलिकायाः २ विस्मितस्य २ समूहस्य ३ विथ्या
२॥५२॥ नटस्य २ लज्जाया २ कुष्ठाख्यौषधस्य २ भेकस्य ३॥५३॥ स्वेदस्य ३
रोमांचस्य २ नवोढाया २ नवयौवनायाः २॥५४॥ सौवर्चललवणस्य २
हिंगुलस्य २ गैरिकस्य २ पारदस्य ३॥५५॥ कंबलस्य २ व्रणस्य ३ कटकस्य
२ ईर्ष्यायुक्तस्य २॥५६॥ ऋणमोक्षस्य २ लग्नकस्य २ पैशून्यस्य २ गेंडस्य
॥५७॥ धूले २ आस्फालस्य २ चौरनीतद्रव्यस्य किंचिन्याप्ते शिबीरथस्य॥५८

पादावधिः

मल्लयात्रामाल्लुवीस्यान्निर्भर्त्सनमलक्तकः २॥ कौशलिकाप्राभृतकं २ मट्टकंलासकं २ विदुः॥ ५९॥ स्वदोषाच्छादनं मक्षं २ श्चुल्लीस्यान्मलकारिका २॥ वाताश्वो भूमिपक्षः २ स्याद्रूरुर्विजयकुंजरः २॥ ६०॥ प्रभाते गोसगोसगो ३ वंजनी लेपकामिनी॥ उत्कटो गंडकुस्कमं २ सिंदूसो मेधिको मतः २॥ ६१॥ वृषाकपिः शिखीशुष्मा ३ भस्म प्रार्घटमर्घटं ३॥ उष्ट्रवाही मीरथो ध्युष्टो गंत्री लघ्वी हि वेशारा ३॥ ६२॥ ऌकणः कृमिस्तदृष्टः २ शक्त्कीटेन्यकारुका ३॥ भारवाहो भारिकः स्यात् २ स्कंधचापो विहंगिका २॥ ६३॥ उन्नतोऽजगरः २ प्रोक्तो हि मुखो हिरद्धीरणिः २॥ पुरोटिः पुरसंस्कारे २ हट्टी पुरतटी मता॥ ६४॥ मृणालिनी पुटकिनी २ स्यासको बुद्बुदो भवेत्॥ कलाची तु प्रकोष्ठः स्यात् २ हुस्तपुच्छस्तकन्युषं २॥ ६५॥ उत्साहः सूत्रतंतुः स्यात्पिंडीरो नीरसः २ स्मृतः॥ हरिणहृदयो भीरुः संदेशोक्तिस्तु वाचकं २॥ ६६॥ शालाजिरो वर्धमानं २ कुसीदं तु कलांबिका॥ २॥ चर्वा तलप्रहारः स्यात्कर्करं २ मुद्गरं विदुः॥ ६७॥ गोष्ठागारे ऽपिगंजः २ स्याच्चिंतावेश्मनि दार्वटं॥ २॥ मन्त्रग्रंथिर्भवेन्मंतुर्निष्कुटो गृहवाटिका २॥ ६८॥

---

मल्लयात्रायाः २ निर्भर्त्सनस्य २ प्राभृतकस्य २ अट्टालिकायाः २।५९। स्वदोषाच्छादनस्य २ चुल्याः २ वाताश्वस्य २ विजयकुंजरस्य २।६०। प्रभातस्य ३ लेप्यकामिन्याः २ संजातमदस्य हस्तिनः २ सिंदूरस्य २।६१। अग्नेः ३ भस्मनः ३ उष्ट्रयुक्तरथस्य २ लघुरथस्य ३।६२। कृमेः २ विष्ठायाः २ भारवाहस्य २ वंशादिनिर्मितशिक्याधानस्य ६३। अजगरसर्पस्य द्विमुखसर्पस्य पुरसंस्कारस्य २ क्षुद्रहट्टस्य २।६४। पुटकिन्याः २ बुद्बुदस्य २।६५। विस्तृतकरस्य २ हस्तपुच्छस्य २।६५। उत्साहस्य २ रसशून्यस्य २ अपशीलस्य २ संदेशवाक्यस्य २।६६। शरावस्य २ कुसीदस्य २ तलप्रहारस्य २ मुद्गरस्य २।६७। गोष्ठागारस्य २ मंत्रणागृहस्य २ अपराधस्य २ गृहवाटिकायाः २।६८।

पृष्ठावधिः

शैलस्यकल्केदंतरस्तह्निंप्रतिवासरे२॥सूत्रमेवसूत्रतंतुः२
कृशराःपितिलौदने२॥६९॥स्यादासवोपिकुरसः२सरकंमद्य
भाजने२॥निश्चुक्कणंदंतशाणं२गोग्रंथिःशुष्कगोमये२॥७०
अष्टापदंनयपीठी२नयस्तुजतुपुत्रकः॥२॥विंदुतंत्रोभवेदक्षः
पाचालीशालिशृंखला२॥७१॥प्रस्तारस्तलिनंशय्या३रोमगु
च्छःप्रकीर्णकं२॥शिवालोपाशिका२ज्ञेयासरमातुंबरीशुनी
३॥७२॥पादांगदीहंसकः२स्यात्प्रतिकर्मप्रसाधनं२॥कर्णपा
लीतुकर्णादू२रंगुलीयकमूर्मिका२॥७३॥खातभूःप्रतिकूपः
२स्याल्लुभास्याहाटशृंखला२॥कंधरातोरणकंठी३सूत्रालीग
लमेखला२॥७४॥शासनंधर्मकीलः२स्यात्संकृतशूद्रशास
ने२॥पट्टोलिकाकूसकीला२सिंदुरंरक्तशासनं२॥७५॥रास
स्तुगोदुहाक्रीडा२गीतिःपारावती२तथा॥वेणुर्यवफलोवं
शो३नवीनेनवकालिका२॥७६॥मुखघंटाहुलहुली२नला
चीनलपट्टिका२॥नीपोधराकदंब२स्याद्वीरभद्रस्तुवीरणं॥
॥७७॥खट्टूटस्तुबृहत्काशं२कोशांकुमित्कटं२विदुः॥गंडी
रस्तुसमंठः२स्याद्ध्रीवेरंवारिवालकं॥७८॥शितोत्पलंगंध

---

शैलतितंबस्य२प्रतिवासरस्य२सूत्रस्यैसतिलौदनस्य२।६९।मदिराभेद
स्य२मद्यभाजनस्य२दंतशाणस्य२शुष्कगोमयस्य२।७०।शारिफलस्य
२गुटिकाया२पाशकस्य२शारिशृंखलाया२।७१।शय्यायाः३चामरस्य
२शृगाल्या२कुकुरस्त्रिय३नूपुरस्य२।७२।वेषस्य२ताटंकस्य२अंगुली
यकस्य२।७३।परिखाया२वाटशृंखलायाः२कंठ्या३गलसूत्रस्य२राज
शासनस्य२।७४॥शूद्रशासनस्य२पट्टाख्यपत्रस्य२रक्तशासनस्य।७५
गोपक्रीडाया२गोपशिशुगीतस्य२वंशविशेषस्य३नवीनस्य२।७६
मुखवाद्यस्य२नलिपट्टिकाया२धराकदंबस्य२वीरणस्य२।७७॥वृह
त्काशस्य२कोशांगस्य२गंडीरस्य२ह्रीवेरस्य२।७८॥सीतोत्पलस्य२

पादावृषि:

सोमं२ हरिमंथोतिमुक्तकः२॥ कर्कारुकस्तकालिंगः२शृंगाटोज
लकंटकः२॥७९॥ हिलमोचीजलब्रह्मी२वायसीकाकमाचिका२
पुन्नागःकेसरश्चैव२चांपेयोनागकेसरः२॥८०॥ स्याद्दोलिकाचहिं
दोला२ल्यावणंलवणं२मतं॥ सुखाशोराजतिमिषः२ कटुकोराज
सर्षपः२॥८१॥ सितमाषोराजमाषो२मसूरोव्रीहिकोचनः२॥म
धुस्त्रीरस्तखर्जूरः२शालःशंकुतरु२र्मतः॥८२॥ मुस्तोराजक
शेरुः२स्याद्रोहिणश्चंदनद्रुमः२॥ काकमद्गुर्जलरंकः२कोयष्टि
र्जलकुक्कुभः२॥८३॥ वर्त्तिकाविष्णुलिंगी२स्याद्दूनास्तुःशशकेः
स्मृतः॥ ताम्रकृमिरिंद्रगोपो२गृहगोधागृहालिका२॥८४॥ दि
वांधोहरिनेत्रः२स्याद्गोनंदीलक्ष्मणामत्ता॥ कुरंकुरःपुष्कराह्वो
२वातुलिस्तरुतूलिका२॥८५॥ कोलपुच्छस्तकंकस्याद्गर्गटोप
गनाविकः२॥ ग्राम्यमद्गुरिकाशृंगी२राजशृंगस्तमद्गुरः२॥८६
पंकग्राहस्तमकरः२शफरःश्वेतकोलकः२॥ चिंगटस्तुमहाश
ल्कः२पीताधानंजलोंडकं२॥८७॥ फलकीतुचित्रफली२मत्स्य
राजस्तुरोहितः२॥ काकोचिकस्तुकाकोचीवकाचीवकचिक्किका२
॥८८॥ कवयीक्रकचपृष्ठीखलेशस्तुखलेशयः॥ इल्लिशोराजशफर२
कूंचाकोजलवृश्चिकः॥२॥८९॥ दंडपालोर्धशफरः२ कंकत्रोटो
जलव्यथः२॥ लघुगर्गस्त्विकंटः स्यात्सितांकोवालुकागडः॥९०

---

अतिमुक्तस्य२कर्कारुकस्य२शृंगाटस्य२॥७९॥ हिलमोच्याः२काकमाच्याः
पुन्नागस्य२नागकेसरस्य२॥८०॥ हिंदोलिकायाः२सौंदर्यस्य२सुखाशकस्य
२राजसर्षपस्य२॥८१॥ सितमाषस्य२क्षुद्रमसूरस्य२खर्जूरस्य२सालवृक्ष
स्य२॥८२॥ मुस्तस्य२रक्तचंदनस्य२जलरंकस्य२कारंडवपक्षिणः२॥८३॥ व
र्त्तिकायाः२शशस्य२ताम्रकृमेः२॥८४॥ मुशल्याः२पेचकस्य२सारसयोषितः
सारसस्य२वादुलेः२॥८५॥ कंकपक्षिणः२गर्गाह्मत्स्यस्य२शृंग्याः२मद्गुरस्य
२॥८६॥ मकरस्य२शफरस्य२चिंगटस्य२रोहितादिशिशोः२॥८७॥ फलक्याः

प्रावधि

कनकपलः कुरुबिस्तः२करिकवलोविधानश्स्यात्।।ग्रासीतु
पंकगडकः२शकुलोदंडपालकः२।।९१।।निचोलकनिचुलकं२
मंदामणिश्लिंजरः२।।वेदिःस्थंडिलस्तिकं२पन्यादोनिष्कुठ-
स्मृतः।।९२।।खोपासिकाखिंखिरीस्यात्पल्याटोनिष्कुटः२स्मृ
त।।अंकेब्धेवांकमेगानि२स्मृतमुत्तानसुत्कटं२।।९३।।स्यान्ना
र्जितारसाला२चक्रुकारःसिंहनादकः२।।कर्णगूथंकर्णमलं२
सिंहाणंनासिकामलं२।।९४।।दंतमलंपुष्पिका२स्यात्कुलकं
रसनामलं२।।कारंधमीधातुवादी२दरिद्रोदुर्विधः२स्मृतः।।९५
स्यान्मंत्रगेडकोविद्या२पक्षद्वारंखडक्किका२।।आर्द्रवस्त्रंजव
द्रंःस्यादोषश्चादीनवोमतः।।९६।।योजनंमार्गधेनुः२स्यान्न
त्वःकिष्कुचतु शतम२।।चोलकोवाणवारः२स्यात्कुर्पासस्त्व
र्धचोलकः२।।९७।।नागोदरसुरस्त्राणं२जंघात्राणंतुमेक्षण२
।।स्यात्प्रासादोदेवकुलं२तत्तु चैत्यं२विनासुखं।।९८।।तृणपू
लीतुन्नचा२स्याद्यथार्थंतुयथातथं२।।आघातनंवधस्थानं
२कारावंधनवेश्मनि२।।९९।।स्कंधाग्निःस्थूलकाष्ठाग्निः२स्तु
णाग्निस्तुभवेत्सम २।।दुंगलस्तुकरीषाग्नि२र्जरग्निस्त्वा

---

रोहितस्य२काकोचिकस्य२वकचिचिकाया२।८८।कवचीमत्स्यस्
२खलेपशस्य२इल्लिशस्य२जलवृश्चिकस्य२।८९।अर्धशफरस्य२
जरुच्यथस्य२त्रिकंटकस्य२वालुकागडस्य२।९०।कनकपलस्य२
करिकवलस्य२पंकगडकस्य२शकुलस्य२।९१।निचोलस्य२अलि
जरस्य२वेद्या२उपवनस्य२।९२।खिंखिरिकाया२पल्याटस्य२अं
गस्य२उत्तानशयनस्य२।९३।नक्रस्य२सिंहनादस्य२कर्णमलस्य२
नासिकामलस्य।९४।दंतमलस्यजिह्वामलस्यस्वर्णकारस्य२दरिद्रस्य२।।९५।।
विद्याया२पक्षद्वारस्य२आर्द्रवस्त्रस्य२दोषस्य२।९६।योजनस्य२न
ल्वस्य२कवचस्य२कूर्पासस्य२।९७उरस्त्राणस्य२जंघात्राणस्य२

सादावधिः

धिमन्यवः २॥२००॥ श्वशुरः स्वामिजनकः २साधुधीर्वरवत्स
ला२॥ अगमार्थस्तथा विद्रो२ हैलाकुको ऽश्वविक्रयी २॥१॥ गृह
वित्तो गृहपतिस्तुंबीपुष्पंलतांबुजं२॥ लोहिकारवरसोनिः २
स्यान्त्रिलिपस्त्रिदशः२स्मृतः॥२॥ गंडूपदीभूलता२स्यान्मंड
रीघुर्घुरी२मता॥ स्वच्छस्यं गुलिसंदेशो२लंघनंचापतर्पणं२॥३
गजढक्कामदाम्मातः२शृंगारोगजमंडनं२॥ अतिमोरणरंकः २
स्यात्अंटुकः कंदरः सृणिः॥३॥४॥ वीचीजललताभृंडिः ३फेणा
ग्रंबुद्बुदं विदुः॥ जंबालोजलकल्कः २स्यादारणिः कूलदंडकः
२॥५॥ विनाकृतंविरहितं२गंडूषोमुखपूरणे २॥ काष्ठमल्लः श
वयानं२कषायस्तूवरोरसः॥६॥ पर्वावधिः परग्रंथिः२पिंजो
लापत्रकाहला॥ गोहलंछगलंमोविट् ३परिघोद्वारकंटकः २
॥७॥ कर्करंचूर्णखंडे२स्यात्कर्कसारंकरंभकं २॥ स्पर्द्धायाम
धिसंहर्षः २कठोरंकर्करं२विदुः॥८॥ बंदीकवरकी२माहुरास्त
दी लघुखद्विका२घटराजः स्मृतः कुंभो२गर्गरीकलशिर्मता
॥९॥ विदुरजन्यमुत्पातं२निर्घातंव्योममुद्गरः २॥ पर्यंतिकागुण
भ्रंशो२गांगेष्टीकटशर्करा२॥१०॥ वक्राकुलकुक्कगुंजा२स्यात्कु

---

देवप्रासादस्य२ यज्ञस्थानभेदस्य२।९८। तृणपूल्याः२यथार्थस्य२ व
धस्थानस्य२ वेधनवेश्मनः२।९९। काष्ठाग्नेः२ तृणाग्नेः२करीषाग्नेः
ज्वराग्नेः२।२००। श्वशुरस्य२ श्वश्र्वाः२ कुटिलस्य२अश्वविक्रयिणः२
।१। गृहपतेः२ तुंबीपुष्पस्य२लोहपुष्पस्य२त्रिदशस्य२।२। भूलतायाः२
घुर्घुर्याः२ अंगुलीध्वनेः२ लंघनस्य२।३। गजढक्कायाः २ गजशृंगारस्य
२रणकातरस्य२।४। अंकुशस्य३।५। तरंगस्य३ फेनाग्रस्य२ जलक
ल्कस्य२ आरणेः२विरहितस्य२ गंडूषस्य२ शवयानस्य२ कषायस्य
२।६। अंगुलीपर्वणः२पिंजोलायाः२ मेमयस्य३ द्वारलगुडस्य२।७कर्क
रस्य२ दधिसक्तोः२स्पर्धायाः२कठोरस्य२।८। कवर्याः२लघुखट्वायाः२

लक्कुस्तालमर्दलः २॥ सूत्रकोणेडमरुकं२ सूत्रवीणाचलाबु॰
की॥११॥ मेलानंदोमसिमणि२र्लेखनीवर्णतूलिका२धातूपल
कठिनिका२मेलापत्रांजनंमसिः३॥१२॥ तर्कुटीसूत्रलातर्कु३
र्झल्लोलस्तर्कुलासकः२॥ वर्तुलातर्कुपाटीस्या२ संजिकातूल
नालिका२॥१३॥ निर्वेष्टनंनाटिचीरंदग्धेष्टकास्याज्झामकम्
॥दोलाप्रेंखापुमान्प्रेंखो३ वारासनंवारसदनं॥१४॥ पिष्टवर्त्ति॰
स्तत्त्वमस२श्चित्रापूपश्चरुव्रणः२॥म्लेछितेपरभाषायां२त्रुटि
कान्यायसारिणी२॥१५॥ सूकापूट्टस्तृणमणि२श्छात्रगंडःप
दाद्यवित्२॥ कोशकारःकाष्ठतंतु२र्घुणःस्यात्काष्ठलेखकः२॥
॥१६॥ विषशृंगीभंगरोलो२र्वरोलस्तृणषट्पदः२॥ तुंदुमोरंध्रव
भ्रुः२स्याद्दीनालिंगालिका२स्मृता॥१७॥ विदारुऋक्रचपादो
२द्रुणश्चालिश्चवृश्चिकः३॥ पद्माक्षंपद्मबीजं२चकर्णिका॰
बीजमातृका२॥१८॥ रंगमालाभवेल्लासा२धीलटिर्दुहिता२
मता॥ चाटलोलश्चदुल्लोलो२जेंगटोदोहृदः२स्मृतः॥१९॥ धौ
तांजलीधौतबली२र्वज्रकंदुग्धपाचनं२॥ चित्रोक्तिःपुष्पशक
टी२श्चासेचनमतृप्तिकृत्२॥२०॥ कालरात्रिर्भीमरथी२अ

---

कुंभस्य२कलश्याः२।९। उत्पातस्य२निर्घातस्य२गुणभ्रंशस्य२कट
शर्करा "या॰२।१०। उल्कायै करताल्स्य डमरुकस्य सूत्रवीणाया २।११। मसि
मणेः२कलमस्य२धातूपलस्य२मसेः३।१२। तर्कुट्याः३ तर्कुलासक
स्य२तर्कुपीठ्याः२ तूलनलिकायाः२।१३। निर्वेष्टनस्य२दग्धेष्टकाया
२दोलायाः२जलस्थापितमंचस्य२।१४। यज्ञपात्रविशेषस्य२चित्रपि
ष्टकस्य२अपशब्दस्य२त्रुटिकायाः२।१५। तृणमणेः२पादाद्यवेत्तुः२को
शकृमे२घुणस्य२।१६। विषशृंगिनः२तृणषट्पदस्य२रंध्रबभ्रोः२
दीनायाः२।१७। ऋक्रचपादस्य२वृश्चिकस्य३ पद्मबीजस्य२पद्म
कोशस्य२।१८। लासायाः२दुहितुः२सुषंक्लस्य२गर्भिण्यभिलाषस्य

पादावधिः

स्वाध्यायोनिराकृतिः २॥ ब्रह्मवादः श्रुतादानं २ विम्बकद्गुरखेटि
कः २॥२१॥ हिंसालुकः १ खादुकः स्याद्योगितो १ लर्कः २ इष्यते॥ द्रु
गडुस्तूर्यगडुः २ स्यादादर्शो मुकुरः २ स्मृतः॥२२॥ राहूत्स्रष्टोर
सोनः २ स्याद्दुंगरीकोलनासिका २॥ मयटः स्तृणहर्म्यः २ स्यात्कु
त्रंगो मंचमंडपः २॥२३॥ खवट्रंगः पणग्रंथि २ श्चिविलिकाकटिशृं
खला २॥ विशारदः प्रसिद्धे २ स्यात्श्रीर्लक्ष्मीरिंदिरा ३ मता २४
॥ ॥ इति पादावधिः॥ ॥ प्राकृशालाचूकशब्दादर्थैः पादैस्त
परं शब्दाः॥ नानार्था अपि शब्दैर्गजशब्दास्त्वभृतिविज्ञेयाः २५

---

॥१९॥ धौतांजल्याः २ दुग्धपाचनस्य २ सुद्रशंकटस्य २ अतृप्तिकृतः २।२०
कालरात्र्याः २ अस्वाध्यायस्य २ ब्रह्मवादस्य २ मृगयाकुशलस्य २ शुनः २।२१।
हिंसालुकशुनः २ उन्मत्तशुनः २ शूर्पविशेषस्य २ आदर्शस्य २।२२। लसुन
स्य २ कोलनासिकायाः २ तृणयुक्तहर्म्यस्य २ शस्परक्षार्थकुटीरस्य २।२३
पणग्रंथेः २ कटिशृंखलायाः २ प्रसिद्धस्य २ लक्ष्म्याः २॥ २२४ ॥ ॥

---

## ॥अथ नानार्थः॥

क्षीरदा शेगुडुक्षोदे गुडे मधुनि चेष्यते॥ कपीटपानमिद्धंतिके निपा
ते च वारिधौ॥२६॥ रसाला रसना पो स्यान्मथिते दध्नि पाणिना॥
पांचलो हृश्रुतिकटः आर्यं चित्ते सरीसृपे॥२७॥ विटो द्रोलवणे षि
ड्गे मूषिके खदिरे पि च॥ वितंडा करवी पाँच दर्विवादप्रभेदयोः॥२८
कारंडवे करंडः स्यान्मधुकोषे दलाढके॥ खटः श्लेष्मण्यंधकूपे
प्रहारांतरटंकयोः॥२९॥ पिच्छा पूगच्छटा कोषे चोलिका फणिलाल
योः पिच्छा स्फोटिकावात्याराभावालासुपांशवः ३०॥ धरांकुरो
वायुफले नासीराशी करे पि च॥ कोट्टारो नागरे कूपे पुष्करिण्यां च
पाटके॥३१॥ नागांजना नागयष्टिः करिसुंदरिका क्वचित् "पूत्यं
डः पूतिकीटे च गंधकीटे च दृश्यते ३२॥ कटुकायां कंचटके कपि

ताशकुलादनी॥क्रौंचादनस्तु घंचुल्यांचिचोटकमृणालयो॥ ३३॥संतानिकाक्षीरसरेतथामर्कटजालके॥खड्गधेनुफलेफेने परांजस्तैलपत्रके ३४॥भालाकोलोहितदष्टःकरपत्रेचकल्पे॥ संकरोग्निचंटत्कारेसंमार्जन्यपसारिते॥३५॥ गोधाकलविका दंतिवधूषुचकटंभरा॥ पंकारःशैवलेसेतौसोपानेजलकुब्जके ॥३६॥पृष्ठशृंगीतिशब्दोयंदंशभीरौपृथूदरे॥मेघपुष्पंतुनादेये पिडाभ्रेसलिलेविदुः॥३७॥पित्तज्वरेकुलालस्यपवनेकूटपालः कः॥ स्तनवृंतेपिप्पलकंतथासीवनसूत्रके॥३८॥पाटलिकों न्यमर्मज्ञेछात्रेस्यात्कालदेशिनि॥जिह्वापोवृषदंशेचस्यादिं द्रमहकर्मणि॥३९॥लाभेकामगुणेरूपेआमिषाख्यातुभोजने ॥छायापथेचदूर्वायांहरितालीध्वनिर्मतिः॥४०॥मालुधानश्चि त्रसर्पेमहापद्मेपिदृश्यते॥उन्मत्तेक्षपणेनर्थकरेकार्यपुटध्व निः॥४१॥सांघाटिकांविदुर्युग्मेकुट्टन्याजलकंटके॥शरादेतेच सर्पेचप्रचलाकंप्रचक्षते॥४२॥चंद्रिकायामब्जधूलीरक्तागेहरि चंदनं॥स्त्रीरत्नेचहरिद्रायांलासायावरवर्णिनी॥४३॥कृकलासे चित्रकोलेतृणगोधाध्वनिंविदुः॥डिंबंभयेचकललेफुप्फुसेचप्र चक्षते४४॥धुधुमारःशक्रगोपेगृहधूमेगृहालिके॥तिक्तपर्वाहि लमोचींगुडूचीमधुयष्टिषु॥४५॥जलबिल्वःकर्कटकेपंचांगेज लवल्कले॥चोलकीनागरंगेचकरीरेकिष्कुपर्वणि॥४६॥कुला लचक्रेवाहनेदंडारःशरयंत्रके॥दिग्जयेवरयात्रायांदंडयात्रां विदु र्बुधा॥४७॥उष्ट्रदासीसुतेचैवदासेरकइतिस्मृत॥जलगुल्मो जलावर्तेकच्छपेजलचत्वरे॥४८॥काहलावेणुवीणादिध्वनि नानाध्वनिंविदुः॥ ॥घोंघेकारुंडिकायांचजाहकध्वनिरिष्य ते॥४९॥विद्युदुत्कलिकाशब्दमुत्कंठावीचिवाचकं॥दृष्टिवि षेसूचकेचद्विजिव्हःसमीकीर्तितः॥५०॥मदमत्ताविदग्धस्त्रीन र्तकीषुचस्वर्णिनी॥रोमावलीमेघमालाकरटीषुचकालिका॥५१

मंत्रुलोमधुरेवंजेजलरंकेजलांचले॥अनुकंपस्तरस्वीस्यात्तपस्वीचधृतव्रतः५२॥ ॥इतिनानार्थार्धश्लोकावधिः॥ ॥शाल्मवृक्षेकपिश्शनौनिष्ठुरःकठिनेऽत्रपे॥छर्दनोलवुषेलिबेन्युष्टकस्येतशोषिते॥५३॥ इक्षौकरीरेकोवांगेव्रणचिन्हेघुणेकिणः॥नर्मठंचंचुकेपिंगेछेकःषट्अंघ्रिवक्रयोः॥५४॥धाराटश्चातकेवाहेलंजःस्यात्पंगुकच्छयोः॥नर्मटःखर्परेसूर्येगोकीलेमुशलेहले५५ भुंडिरीर्वारुकूष्मांडेफाणिर्गुडकलेवयोः॥तंडकःखंजनेफेनेलट्वाशिन्यांखगांतरे५६ गजेपिनागमातंगौविशेषस्तिलकेपिच॥निष्पावःसूर्पवातेपिसूत्रकंठोद्विजेपिच५७ विदुष्यपिस्मृतोवेधाःपुरंदरेहेपिदृश्यते॥स्वरेपिकंठआख्यातःशरत्संवत्सरेप्यपि५८ ॥लाक्षापिजतुकाप्रोक्तालग्नाचार्येपिहिंडिकः॥नौसेचनेपिवारुंडःपादालिंदेपिपंकिलः॥५९॥कचोगीष्पतिपुत्रेपिकुंदेपिभ्रमरोव्रतो॥भांडंभूषणमात्रेपिरुधिरंकुंकुमेपिच॥६०॥गोमेदकेपिगंगोलःकटाहोनिरयेपिच॥मरीचेपिभवेत्कृष्णाशूर्पांगेगुणिकाभवेत्॥६१॥शस्त्र्यामपिखड्गधेनुर्निस्त्रिंशोःकरुणेपिच॥स्कंधावारेऽपिकटकोविंदुस्तुविदुरेपिच॥६२॥जलसूचिजलौकापिवेश्यायामपिपिंगला॥अद्रिरप्युदरावर्तेविशाखापिखनित्रकः॥६३॥भ्रमरःकामुकेपिस्याद्गंगीकारेपिचाश्रकिं॥महालयेपितीर्थंस्यात्भोजनेपितथान्हिकं॥६४॥बलिश्चामरदंडेपिपादपीठेपिपादपः॥गोदंतोहरितालेपिवानीरश्वित्रकेप्यपि॥६५॥आधारेप्याश्रयःप्रोक्तोगजसंघेप्यवग्रहः॥कथितासाजटायांचमार्गणेपिमृगःक्व चित्॥६६॥मूषिकापिभवेद्धीनाजटारंकोहरेपिच॥अश्रमरुतेपिफाटंमृद्भांडेऽप्युष्ट्रिकाभवेत्॥६७॥अंगसादेपिसदनंवनदावेपिझिंझिमः॥दंतमांसेपिवेलास्याच्छुल्कंनारीधनेप्यपि॥६८॥निंबेपिद्विगुनिर्यासोमेलानंदेपिवार्दलं॥लेखन्या

कर्णिकापिस्यात्कटिन्यामपिवर्णिका॥६९॥पटलेपिकासम
र्दोदिष्टदैवेपिकीर्तितं॥दाडिमेपिचहिंडीरंवंशोवेणोकुलेपि
च॥२७०॥ ॥इतिनानार्थः॥ ॥
काव्यादीनामनंतत्वाच्छब्दादीनांविशेषतः॥ कुत्रकेनकिं
दृष्टमितिकोवेदितुंक्षमः॥७१॥अतःशब्दःकदृष्टोयमर्थत
श्चापिकीदृशः॥इतिकाव्यमलीकंस्यान्मात्सर्यमलिनात्म
नां॥७२॥शब्दार्णवउत्पलिनीसंसारावर्तइत्यपि॥कोषावाच
स्पतिव्याडिविक्रमादित्यनिर्मिताः॥७३॥आदायसारमेतेषा
मन्येषांचविशेषतः॥हारावलीनिर्मितेयंमयाद्वादशवत्सरैः
॥७४॥उपास्यसर्वज्ञमनंतमीशंभूत्वातिथिःश्रीधृतिसिंह
वाचां॥हारावलीद्वादशमासमात्रैर्विनिर्मितेयंपुरुषोत्तमेन॥
॥७५॥नानाकाव्यपुराणनाटककथाकोषेतिहासस्मृतिज्योः
तिः शास्त्रगजाश्वमानवभिषक्कोषान्प्रयत्नादपि॥दृष्ट्वान्या
निचशाब्दिकैःसहकृताहारावलीयत्नतःकर्तव्योत्रनसंश
यःसुमनसश्शब्दार्थलिंगेष्वपि॥७६॥सुधियाजनमेजयेन
यत्नात्धृतिसिंहेनसमंनिरूपितेयं॥विदितोवहुदृश्वभिः
कवीन्द्रैर्भुविकोषानुमतःश्रमोमदीयः॥७७॥हित्वामहाशा
ब्दिकताभिमानंमात्सर्यमन्यत्रमुहुर्निधाय॥हारावलीयः
प्रकरोतिकंठेविदग्धगोष्ठीषुपरंसभाति॥७८॥ ॥इतिश्री
महामहोपाध्यायपुरुषोत्तमदेवप्रणीताहारावलीपर्यवसिता

॥इतिहारावलीसमाप्ता

श्रीगणेशायनमः॥तन्नमामिपरंज्योतिरवाङ्मनसगोचरम्॥उ
न्मीलयत्यविद्यांयद्विद्यामुन्मीलयत्यपि॥१॥द्वयंद्वितयमुभयंय
मलंयुगलंयुगं॥युग्मंद्वंद्वंयमंद्वैधंपादयोःपातुजैनयोः॥२॥ऋषि
र्यतिर्मुनिर्भिक्षुस्तापसःसंयतोव्रती॥तपस्वीसंयमीयोगीवर्णी
ऊं२ साधुश्चपातुवः॥३॥दीक्षितंमौण्डंशिष्यंचतमंतेवासिनंविदुः॥
मुडि तं२ कृतान्तागमसिद्धान्ताग्रन्थःशास्त्रमतःपरम्॥४॥भूमिर्भूःपृथि
वीपृथ्वीगह्वरीमेदिनीमही॥धरावसुमतीधात्रीक्षमाविश्वंभ
रावनिः॥५॥वसुधाधरणीक्षोणीक्ष्माधरित्रीक्षितिश्चकुः॥
कुंभिनीलोर्वराचोर्वीजगतीगौर्वसुंधरा॥६॥तत्पर्यायधर
शैलस्तत्पर्यायपतिर्नृपः॥तत्पर्यायरुहोवृक्षःशब्दमन्यंच
योजयेत्॥७॥दरीभृदचलःशृंगीपर्वतःस्थाणुमान्गिरिः॥नग
शिलोच्चयोद्रिश्चशिखरीत्रिककुन्मरुत्॥८॥प्रस्थपार्श्वे
तटंसानुर्मेखलोपत्यकातटी॥नितंबमेतौदंतश्चतद्धानपिगि
रिःस्मृतः॥९॥राजाधिपःपतिःस्वामीनाथःपरिवृढःप्रभुः॥ई
श्च श्वरोविभुरीशानोभर्त्तेन्द्रइनईशिता॥१०॥अनोकहस्तरुः
ह्रिपः शाखीविटपीफलिनोनगः॥द्रुमोद्रुःघ्रिपःफलेग्राहीपादपो
हिः गोवनस्पतिः॥११॥तत्पर्यायचरोज्ञेयोहरिर्वलिमुखःकपिः॥वा
नरःप्लवगश्चैवगोलांगूलोथमर्कटः॥१२॥विपिनंगहनंकक्षम
रण्यंकाननंवनम्॥कान्तारमटवीदुर्गंतच्चरस्त्याहुर्वनेचरः॥
१३॥पुलिन्दःशबरोदस्युर्निषादोव्याधलुब्धकौ॥धानुष्कोथ
किरातश्चसोरण्यानीचरःस्मृतः॥१४॥वावारिकंपयोभोः
वुपाथोर्णःसलिलंजलम्॥शंवरंवनंकुशंनीरंतोयंजीवनंम
विषम्॥तत्पर्यायचरोमत्स्यस्तत्पर्यायप्रदोघनः॥तत्पर्या
योद्भवेपद्मंतत्पर्यायधरोम्बुधिः॥१६॥पृथुरोमाषडक्षीणोपा
दोवैसारिणोझषः॥विसारीशफरीमीनःपाठीनोनिमिषस्ति
मिः॥१७॥घनाघनोघनोमेघोजीमूतोभ्रंवलाहकौ॥पर्ज

न्योमुदिरोनभ्राट् तडित्सौदामनीपविः ॥१८॥ आकालिकी स्फुरुचिर्विद्युत्स्तस्फूर्जथुर्निर्घातः ॥ निर्घातमशनिर्वज्रमुल्काशब्दं च योजयेत् ॥१९॥ परिषत्कर्दमः पंकस्तज्जं तामरसं विदुः कमलं नलिनं पद्मं सरोजं सरसीरुहम् ॥२०॥ स्वरदण्डकोकनदं पुंडरीकं महोत्पलं ॥ इंदीवरं चारविंदं शतपत्रं च पुष्कर ॥२१॥ सौगंधिकं तु कल्हारं हल्लकं रक्तसन्ध्यकम् ॥ स्यादुत्पलं कुवलयमथ नीलांबुजन्म च ॥ इन्दीवरं च नीलेऽस्मिन् सिते कुमुदकैरवे ॥२२॥ तद्वती विसिनी ज्ञेया व्रततीवल्लरीलता ॥ वल्लीनामानि योज्यानि वारिधिर्वर्ण्यते धुना ॥२३॥ स्त्रोतस्विनी धुनी सिंधुः स्रवंती निम्नगापगा ॥ नदी नदो हि रेफश्च सरिन्नाम्नी तरंगिणी ॥२४॥ तत्पतिश्च भवस्याब्धिः पारावारो मृतोद्भवः अपारवारो कूपारो रत्नमीनाभिधं कर ॥२५॥ समुद्रो वारिराशिश्च सरस्वान्सागरोऽर्णवः ॥ सीमोपकण्ठं तीरं च पारं रोधो वधिस्तटम् ॥२६॥ भंगस्तरंगः कल्लोलो वीचिरुत्कलिकावलि ॥ पालीवेलातटो च्छासी विभ्रमो यमुदन्वतः ॥२७॥ मनुष्यो मानुषो मर्त्यो मनुजो मानवो नरः ॥ ना पुमान्पुरुषो गोधो धवः स्यात्तत्पतिर्नृपः ॥२८॥ भृत्यश्च भृतकः पत्तिः पदातिः पदगोऽनुग भटोऽनुजीव्यनुचरः शस्त्रजीवी च किंकरः ॥२९॥ स्त्री नारी वनिता मुग्धा भामिनी भीरुरंगना ॥ ललना कामिनी योषित् योषा सीमंतिनी वधूः ॥३०॥ नितंबिन्यबला बाला कामुकी वामलोचना ॥ भामा तनूदरी रामा सुंदरी युवती चला ॥३१॥ भार्या जाया जनिः कुल्या कलत्रं गेहिनी गृहं ॥ महिला मानिनी पत्नी तथा दाराः पुरंध्रयः ॥३२॥ वल्लभा प्रेयसी प्रेष्ठा रमणी दयिता प्रिया ॥ दृष्टा च प्रमदा कांता चंडी प्रणयिनी तथा ॥३३॥ सती पतिव्रता साध्वी पतिवत्ये कपत्न्यपि ॥ मनस्विनी भवस्या या विपरीता निरूप्यते ॥३४॥ बन्धकी कुलटा मुक्ता पुनर्भूः पुंश्चली खेला ॥ स्यशोभिसारिका दूती स्वैरिणी सैफ

लीतयो॥३५॥गणिकालंजिका वेश्या रूपाजीवा विलासिनी॥पण्य
स्त्रीदारिका दासी कामुकी सर्ववल्लभा॥३६॥कान्तेष्टो दयितः प्री
तः प्रियः कामी च कामुकः वल्लभोऽस्य पतिः प्रेयान् विटश्च रमणो
वरः॥३७॥सावित्री जननी माता जनकः सविता पिता॥देहोप
घनः कायोऽङ्गं वपुः संहननं तनुः ३८॥कलेवरं शरीरं च मूर्तिरस्मि
न्भवस्सुतः॥पुत्रस्तु सूनुरपत्यं च तुक् तोकं चात्मजः प्रजा॥३९॥
उद्वहस्तनयः पोतो दारको नन्दनोऽर्भकः॥स्तनंधयोत्तानशयौ स्त्री
त्वे दुहितरं विदुः॥४०॥वयस्यालीसहचरी सध्रीची सवयाः सखी
॥आली विवर्जितं मित्रं सम्बन्धो मित्रं सुहृत्॥४१॥सहकृत्वा
सहकारी सहायः सामवायिकः॥सनाभिः सगोत्रो बन्धुः सोदर्यो
ऽवरजोऽनुजः॥४२॥कनीयानग्रजो ज्येष्ठो भ्रातृजानी स्वसानजा
॥भर्तुस्स्वसाननान्दा स्यान्मातुलानी प्रियाम्बिका॥४३॥वैर्यरा
तिरमित्रोऽरिर्द्विट्सपत्नो द्विषद्रिपुः॥भ्रातृव्यो दुर्जनः शत्रुर्दुष्टो द्वे
षीखलोऽहितः॥४४॥दीधितिर्भानुरुस्रोऽंशुर्गभस्तिः किरणः करः
पादो रुचिर्मरीचिर्भास्तेजोऽर्चिर्गौर्द्युतिः प्रभा॥४५॥दीप्तिर्ज्योतिर्म
हो धाम रश्मिरुज्ज्योतिर्विभावसुः॥शीतोष्णप्रायपूर्वत्वे तद्वन्तौ विधुभा
स्करौ॥४६॥शशी विधुस्सुधारश्मिः कौमुदीकुमुदप्रियः॥कलाभृ
च्चन्द्रमाश्चन्द्रः कान्तिमानोषधीश्वरः॥४७॥उडु निभानि तारक्षं न
क्षत्रं तत्पतिर्निशा॥क्षणदा रजनी नक्तं दोषा श्यामा क्षपाकरः॥
॥४८॥तरणिस्तपनो भानुर्ब्रध्नः पूषार्यमा रविः॥तिग्मः पतंगो द्युम
णिर्मार्त्तण्डोऽर्को ग्रहाधिपः॥४९॥इनः सूर्यस्तमो ध्वान्तं तिमिरारि
र्विरोचनः॥दिनं दिवाऽहर्दिवसो वासरस्तत्करस्त्वसः॥५०॥चक्र
वाकाब्जपर्यायबन्धुः कुमुदविप्रियः॥यमुनायमकानीनजन
कः सविता मतः॥५१॥वाहोऽश्वस्तुरगो वाजी हयो धुर्यस्तुरं
गमः॥सप्तिर्वाहहरी रथ्यः सप्ताश्वश्च मयूखवान्॥५२॥रवेर्वि
तायो वियद्व्योम गगनं नाकशमम्बरं॥द्यौर्नभोऽन्तरिक्षं च मेघ

मेघपथ वायुपथ पक्षिण विद्याधरस्यापि

वायुपथोऽप्यथ ॥५३॥ तच्चरः खेचरस्तग पक्षीपत्त्रीपतन्त्र्यपि ॥ श
कुन्तः शकुनिर्विश्च पतंगो विष्करो वया ॥५४॥ जाङ्गलंपिशितं मां
सं पलं पेशी च तत्प्रियः ॥ यातुधानस्तथा रक्षो रात्र्यादिचरइष्यते ॥
५५॥ सुतो दितेस्तडिद्दन्वासेन्द्रो देवः सुरो मरुः ॥ स्वर्द्यौः स्वर्गोऽथ
नाकश्च तद्वासस्त्रिदिवो मतः ॥५६॥ तत्पतिश्शक्र इन्द्रश्च सुनासी
रश्शतक्रतु ॥ प्राचीनबर्हिः सुत्रामा वज्री चाखण्डलो हरिः ॥५७
शत्रुर्बलस्य गोत्रस्य पाकस्य नमुचेरपि ॥ वृत्रहा च सहस्राक्षो गी
र्वाणेशः पुरन्दरः ॥५८॥ विडौजाश्च स्मरो नाथो वासवो हरिवा
हनः ॥ मरुतश्च मरुत्वांश्च वृषा चैरावणाधिपः ॥५९ शतमन्यु
स्तुराषाड्पुरुहूतश्च कौशिकः ॥ संक्रन्दनोऽथ मघवान्पुलोमा
रिर्मरुत्सखः ॥६०॥ काष्ठा ककुद्दिगाशा च दक्षकन्या तथा हरित्
तत्पर्याया त्परं योज्यं प्राज्ञैः पालगजाम्बरम् ॥६१॥ पवनः पवमानश्च
वायुर्वातोऽनिलो मरुत् ॥ समीरणो गन्धवाहः श्वसनश्च सदागति
॥६२॥ नभस्वान्मातरिश्वा च चरेण्युर्जवनश्चलः ॥ प्रभञ्जनोऽस्य प
र्यायपुत्रो भीमाञ्जनात्मजौ ॥६३॥ तत्सखोऽग्निः शिखी वह्निः पा
वकश्चाशुशुक्षणिः ॥ हिरण्यरेताः सप्तार्चिर्जातवेदास्तनूनपात् ॥६४॥
स्वाहापतिर्हुताशश्च ज्वलनो दहनोऽनलः ॥ वैश्वानरः कृशानुश्च
लोहिताश्वो विभावसुः ॥६५॥ वृषाकपिः शमीगर्भो हव्यवाहो हु
ताशनः ॥ धनंजयो वीतिहोत्रः कृष्णवर्त्मा ह्युषर्बुधः ॥ तदादिसूनु
सेनानी स्कन्दस्तु शिखिवाहनः ॥६६॥ कार्त्तिकेयो विशाखश्च कुमा
रः षण्मुखो गुहः ॥ शक्तिमान्क्रौञ्चभेदी च स्वामी शरवणोद्भवः ॥ ष
डजन्मा ब्रह्मचारी च महौजा दैत्यघातकः ॥ तत्पिता शंकरश्शंभुः
शिवः स्थाणुर्महेश्वरः ॥६७॥ त्र्यंबको धूर्जटिश्शर्वः पिनाकी प्रम
थाधिपः ॥ त्रिपुरारिर्विशालाक्षो गिरिशो नीललोहितः ॥६८॥ रुद्रो दु
मौली यज्ञारिस्त्रिनेत्रो वृषभध्वजः ॥ उग्रः शूली कपाली च शिपिवि
ष्टो भवो हरः ॥६९॥ उमापतिर्विरूपाक्षो विश्वरूपः कपर्द्यपि ॥ भोगी

रथीः त्रिपथगा जान्हवी हिमवत्सुता मन्दाकिनी द्युपर्यायधुनी
गंगा नदीश्वरी विधिर्वेधा विधाता च द्रुहिणोऽजश्चतुर्मुखः ॥७०
पद्मपर्याययोनिश्च पितामहविरंचिनौ ॥ हिरण्यगर्भः स्रष्टा च प्र
जापतिः सहस्रपात् ॥७१॥ ब्रह्मात्मभूरनन्तात्मा कस्तत्पुत्रो
हि नारदः ॥ कृष्णो दामोदरो विष्णुरुपेन्द्रः पुरुषोत्तमः ॥७२॥ के
शवश्च हृषीकेशः शार्ङ्गी नारायणो हरिः ॥ केशी मधुर्बलिर्बाणो
हिरण्यकशिपुर्मुरः ॥७३॥ नदादिसूदनः शौरिः पद्मनाभोऽप्य
धोक्षजः ॥ गोविन्दो वासुदेवश्च लक्ष्मीः श्रीर्गोमतीन्दिरा ॥७४॥
तत्पतिः शैलभूम्यादिधरश्चक्रधरस्तथा ॥ तत्पुत्रो मन्मथः कामः
शूर्पकारिरनन्यजः ॥७५॥ कायपर्याय इत्तो मदनो मकरध्वजः ॥
शिलीमुखः शरो बाणो मार्गणो रोपणः कणः ॥७६॥ इषुकांडे क्षुर
प्रं च नाराचं तोमरं खगः ॥ कार्मुकं धन्व चापं च धर्मकोदंडके धनुः
॥७७॥ शिलीमुखादेरसनं तत्कोटिमटनीं विदुः ॥ पुष्पं सुमनसः फु
ल्लं लतान्तं प्रसवो द्रुमो ॥७८॥ प्रसूनं कुसुमं तत्पंतदायस्त्रः शरः
स्मरः ॥ स्वान्तमास्वनितं चित्तं चेतोऽन्तःकरणं मनः ॥७९॥ हृदयं विशि
खाकूतमारस्तत्र भवो मतः ॥ मौर्वी जीवा गुणो गव्या ज्यालिर्भृङ्गः
शिलीमुखः ॥८०॥ भ्रमरः षट्पदो ज्ञेयो द्विरेफश्च मधुव्रतः ॥ मौर्व्या
दिशान्तमल्यादि कन्दर्पस्य भवेद्धनुः ॥८१॥ हेतिरस्त्रायुधं श
स्त्रं पुष्पायस्त्रः स्मरो मतः ॥ ध्वजपताकाकेतुश्च चिन्हं तद्वै जये
त्यपि ८२ तत्तदंतोऽझषाद्यादिशभो विघ्नकरः स्मरः ॥ कौक्षेयकोऽसिर्निस्त्रिं
शः कृपाणः करवालकः ८३ तरवारिर्मंडलाग्रं खड्गनामा बलिर्विदः अक्षौहि
णी बलानीकं वाहिनी साधनं चमूः ॥ ध्वजिनी सेना पृतना सैन्यं दंडो वरूथिनी
कंदनं समरं युद्धं संयुगं कलहं रणम् ॥८५॥ संग्रामः सम्परायाजी
संयदो हि महाहवम् ॥ गजो मतंगजो हस्ती वारणोऽनेकपः करी ॥
॥८६॥ दन्ती स्तम्बेरमः कुंभी द्विरदो भौ मतंगमः ॥ शुण्डालः साम
जो नागो मातंगः पुष्करी द्विपः ॥८७॥ करेणुः सिन्धुरस्तेषु यन्तानि

सिंहस्य
तानिषाद्यपि॥नागाद्यरिः कंठीरवो मृगेन्द्रः केसरी हरिः॥८८॥
व्याघ्रश्च शूरः शार्दूलः शरभोऽष्टापदो ष्टपात्॥क्रोडो वराहो दं
ष्ट्री च घृष्टिः पोत्री च शूकरः॥कोलः किरिः किटिश्चौणी भूदारः क
र्दमप्रियः॥८९॥
उष्ट्रस्य
उष्ट्रो मयः स्यूरवलकः करभः शीघ्रगामिकः॥
श्वन
कौलेयकः सारमेयो मंडलः श्वा पुरोगतिः॥९०॥ जिव्हापो ग्राम
स्वर्णस्य
शार्दूलः कुक्कुरो रात्रिजागरः॥ हेम चाष्टापदं स्वर्णं कनकार्जु
चामीकर
नं कांचनम्॥९१॥ सुवर्णं हिरण्यं भर्म जातरूपं च हाटकम्॥त
पनीयं कलधौतं च कार्तस्वरं शिलोद्भवं॥९२॥ रूप्यं रजतं गुलि
का शुक्तिजं मौक्तिकं तथा॥ वित्तं वस्तु वसु द्रव्यं स्वापतेयं द्रविणं
कुबेरस्य
धनम्॥९३॥ कः स्वरत त्पतिं प्राहुः कुबेरं चैकपिंगलम्॥वैश्रवणं
राजराजं गुह्यकेशपतिं तथा॥९४॥अलकानिलयं श्रीदं धनपर्या
देशस्य
यराम्बकम्॥राष्ट्रं जनपदो नग्रो जनान्तो विषयः स्मृतः॥९५॥ पु
मुखस्य
री पूः पुरं नगरी पत्तनं पुटभेदनं॥ वक्त्रं लपनमास्यं च वदन्तीं व
कर्णस्य
दनं मुखम्॥९६॥आननं श्रवणं श्रोत्रं श्रवः कर्णं श्रुतिं विदुः॥
कटाक्षस्य
दृगक्षि चक्षुर्नयनं दृष्टिर्नेत्रं विलोचनम्॥९७॥कटाक्षः केकरापांग
विभ्रमः
विभ्रमस्तस्य वेक्षितम्॥ दन्तावासो धरः प्योष्ठो वर्णितो दश
कंठस्य
नच्छदः॥९८॥ शिरोधरो गलो ग्रीवा कंठश्च धमनी धमः॥ दोर्दोःपा
हस्तस्य
चं भुजा बाहुः पाणिर्हस्तः करस्तथा॥९९॥ प्राहुर्वा हुशिरोंऽसं च
वक्षस्य
हस्तशाखा करांगुलिः॥नासा घ्राणं मुरो वक्षः कुक्षिः स्याज्जठरो
दरम्॥१००॥स्तनं पयोधरं कुचौ वक्षोजा इति वर्णितौ॥कटिर्नि
तम्बः श्रोणी च जघनं जानुजंघे च॥१॥ चलनं चरणं पादः क्र
मौ ऽघ्रिश्च पदं विदुः॥शिरोमूर्ध्नि तमांगकं सारभ्य मरितं रितम्॥
॥२॥वाग्वचो वचनं वाणी भारती गीः सरस्वती॥सिंहद्विपधने
भे जो हि चां श्वे वृंहितं गजे॥३॥स्फीतकृतं धेनुकलभे स्तनितं
जलदे तथा॥ स्पन्दने चीत्कृतं मंत्रे भटे धृष्टो च हुहु तम्॥४॥
सीत्कृतं मणितं कामे खड्गे नैस्त्रंशं लायुधे॥मंजीरं कं तुलाका

टिर्नूपुरं तच्चैककृते ॥५॥ क्रोड्कृतं मरुति क्रोंचहंसयोश्वेंकृतं मतं
॥ प्रतीतस्तत्कृतं लब्धं दृष्टं परिचितं स्मृतं ॥६॥ संस्थितं दशमीस्थं
च परासुं च मृतं विदुः ॥ खेदो दुःखोप्यमुष्मैः क्रुद्धः कोपः क्रोधमन्यवः ॥
७॥ हर्षः प्रमोदः प्रमदो मुत्तोषानन्दमुत्सवः ॥ कृपानुकम्पानुक्रो
शोद्वितोक्तिः करुणा दया ॥८॥ शेमुषी धिषणा प्रज्ञा मनीषा धी
स्तथाशयः ॥ प्राज्ञो मेधादिमान्विद्वानभिरूपो विचक्षणः ॥९॥ प
ण्डितस्सूरिराचार्यो वाग्मी नैयायिकः स्मृतः ॥ पारिषद्यो बुधः
सभ्यस्सदस्यस्सत्सभोचितः ॥१०॥ आस्थानाधिपतीशस्तो राज
सूयो नृपक्रतुः ॥ विष्टरं मल्लकं पीठमासंदी मासनं विदुः ॥११॥ चे
लं निवसनं वासश्चीरमम्बरमंशुकं ॥ वस्त्राद्यन्तदिगाद्यादि संजि
तो वृषभेश्वरः ॥१२॥ विष्टपं भुवनं लोको जगत्तस्य पतिर्जिनः ॥ स
र्वज्ञो वीतरागोर्हन्केवली धर्मचक्रभृत् ॥१३॥ तीर्थंकरस्तीर्थकर
स्तीर्थकृत्तीर्थवाक्पतिः ॥ वर्षीयान्वृषभो ज्यायान्पुरुषाद्यः प्रजा
पतिः ॥१४॥ ऐक्ष्वाकुः काश्यपो ब्रह्मा गौतमो नाभिजोऽग्रजः ॥ स
न्मतिर्महतिर्वीरो महावीरोन्त्यकाश्यपः ॥१५॥ नाथान्वयो व
र्द्धमानो यत्तीर्थमिह सांप्रतम् ॥ कुंकुमं रुधिरं रक्तं कस्तूरी मृग
नाभिजा ॥१६॥ कर्पूरं घनसारं च हिमं सेवेत पुण्यवान् ॥ समाल
भोंगरागश्च प्रसाधनविलेपनम् ॥१७॥ भूषणाभरणं हृद्यं माल्यं
माल्यगुणं स्रजम् ॥ मेखला रशना कांची हेमपर्यायसूत्रकं ॥१८
श्रोणीबिम्बे कटीसूत्रमानसूत्रमिवाहितं ॥ मदिरा मद्यमैरेयं सी
धुकादम्बरी मिराम् ॥१९॥ प्रसन्ना वारुणी हाला मधु वारां सुरां
विदुः ॥ शुण्डाऽसवकरोप्यष्वः शौण्डागर्वितमद्यपौ ॥२०॥ सक्तो
ऽसौ द्यूतपानेषु विचित्राः शब्दप्रवृत्तयः ॥ सर्पिर्हैयंगवीनाज्यं दुग्ध
क्षीराः स्मृतं पयः ॥२१॥ उदश्विन्मथितं तक्रं कालसेयं पिबेद्गुरुः ॥
भायो वयो दशाऽनेहः पूर्णयौवनकं विदुः ॥२२॥ तारुण्यं यौवनं चा
प्येवाहीनः स्थविरो मतः ॥ वंशोन्वयोऽन्ववायः स्यादाम्नायः संततिः

अर्जुनः फाल्गुनो जिष्णुः श्वेतवाजी कपिध्वजः ॥ गांडीवकामु-
कीसव्यसाची मध्यमपांडवः ॥ ४२ ॥ वृषसेनासुनिर्मोको दैत्यारिः
शक्रनंदनः ॥ कर्णमौलिः किरीटी च शब्दभेदी धनंजयः ॥ ४३ ॥
समवर्त्ती यमः कालः कृतान्तो मृत्युरन्तकः ॥ कुरुकीचकयोः श-
त्रुर्वायुपुत्रो वृकोदरः ॥ ४४ ॥ धर्मात्मजो जातरिपुः कौंतेयो भरता-
न्वयः ॥ कौरव्यो राजलक्ष्मा च सोमवंशो युधिष्ठिरः ॥ ४५ ॥ कृ-
ष्णं नीलं असितं कालं धूमं धूम्रमलिप्रभं ॥ तमोन्धकारस्तिमिरं ध्वां-
तं सन्तमसं तमः ॥ ४६ ॥ श्वेतार्जुनः शुचिः श्वेतो वलक्षः सितपा-
ण्डुरम् ॥ शुक्लावदातं धवलं पाण्डु शुभ्रं शशिप्रभम् ॥ ४७ ॥ लोहि-
तं रक्तं माताम्रं पाटलं विषदारुणम् ॥ गौरपीतं हरिद्राभं पलाशं
हरितं हरित् ॥ ४८ ॥ हरिणी लोहिणी शोणी गौरी श्येनी पिशंग-
पि ॥ सारङ्गी शवरी काली कल्माषी नीलपिंजरी ॥ ४९ ॥ पुरागम-
धु किंजल्कं मकरन्दं च कौसुमम् ॥ उपचारो रजः पांसुरेणुं धूली
च योजयेत् ॥ ५० ॥ कलंको वद्यं मलिनं किंजल्कं लक्ष्मलांछनं
निर्वाधं मधसं पंकं मलीमसं मपिस्यजेत् ॥ ५१ ॥ जनोदाहरणं की-
र्त्तिसाधुवादयशो विदुः ॥ वर्णो गुणावलिः ख्यातिमवधानं तु सादृ-
सेम् ॥ ५२ ॥ प्रेष्यादेशनिदेशाज्ञा नियोगः शासनं तथा ॥ सन्देशः
प्रियवार्त्ता प्रवृत्तिः किम्वदन्त्यपि ॥ ५३ ॥ कठोरं कठिनं स्तब्धं कर्क-
शं परुषं दृढम् ॥ अश्लीलं कांदलं फल्गु कोमलं मृदुपेशलम् ॥
॥ ५४ ॥ प्रत्यग्रं साम्प्रतं नव्यं नवं नूतनमग्रिमम् ॥ पुराणं जरठं जी-
र्णं प्राक्तनं सुचिरं तनम् ॥ ५५ ॥ भौरे देहोपि चामन्त्रे केश्वित्किंस्विन्न-
संशये ॥ द्राक्क्षणे ह्यायसपदि निमेषे मनस्वल्वलम् ॥ ५६ ॥ उच्चै-
स्त्वावचैतु तुङ्गमुच्चमुन्नतमुच्छ्रितम् ॥ नीचं न्यग्गातनं कुब्जं नीचै-
र्ह्रस्वं नेपेतं परम् ॥ ५७ ॥ अमासदृसमं साकं सार्द्धं सनं सज्जूः समाः
॥ सर्वदा सततं नित्यं शश्वद्रास्यंतिकं सदा ॥ ५८ ॥ भृंगी दृतिहरिनो
थहरिस्तिर्यंच शृंगिणो ॥ गोश्वस्तु श्यात पशुस्तत्र महिषीनाम दृष्टिको ५९

वियोगमदनावस्थाविरहपल्लकविदुः॥प्रेमाभिलाषमालम्बरा
गःस्नेहमतःपरम्॥६०॥संहितःसहितंयुक्तंसंश्लक्तंसंभृतंस्तुतं
॥संस्कृतंसमवेतंचप्राहुरन्वीतमन्वितम्॥६१॥वर्त्माध्वासं
रणिःपन्थामार्गप्रचरसञ्चरौ॥त्रिमार्गकानामगङ्गाघोषोगो
मण्डलव्रजे॥६२॥स्रोतीनदीस्रोतोनिम्नगा॥कुशलोनिपुणःपटुः
॥क्षणःप्रवीणःप्रागल्भःकोविदश्चविशारदः॥६३॥विदग्धश्चतु
रोधूर्त्तश्चाटुकःकितवःशठः॥कापिनागरिकोज्ञेयोगोत्रसंज्ञ
कंनामतत्॥६४॥मुग्धोमूढोजडोजेडोमूकोमूर्खश्चकहृदः॥
संदेवानांप्रियोप्राज्ञोमन्दोधीनामवर्जितः॥६५॥षाष्टिकःक
लमःशालिर्व्रीहिःस्तम्बकरिस्तथा॥वत्सःशकृत्करिर्जातःषोड
षद्दशनःस्मृतः॥६६॥शौण्डीरोगर्वितःस्तब्धोमानीचाहङ्कृ
तः॥उद्भीवउद्धुरोदृप्तोनीचश्चपिशुनोधमः॥६७॥चौरेका
गारिकस्तेनतस्करप्रतिरोधकाः॥निशाचरोगूढचरोहारिकश्च
णिधीश्वरः॥६८॥प्रस्तरोपलपाषाणदृषद्धातुशिलाघनाः॥
तत्रजातमयोलोहंशातकुंभंनपेत्परम्॥६९॥साधीयोत्यर्थम
त्यंतंनितांतसुष्ठुवैभृशम्॥स्फुटंसाधुखलुस्पष्टंविशदंपुष्कलं
मलम्॥७०॥चित्रंआश्चर्यमद्भुतंचोद्यंविस्मयःकौतुकोप्यहो॥
अभियोगोद्यमोद्योगाउत्साहोविक्रमोमतः॥७१॥क्षामंशान्तं
कृशंक्षीणंहीनंजीर्णंपुरातनम्॥शीर्णंविसानंन्यूनंचधैर्यं
शौर्यंचपौरुषम्॥७२॥रहोनुरहसोपांशुरहस्यंचाभिनन्तिकः
॥कीनाशःकृपणोलुब्धोमुग्धोदीनोभिलाषुकः॥७३॥क्षिप्रा
शुमङ्क्षुस्वरंशीघ्रंसहसाञ्जसाद्रुतम्॥तूर्णंजवःस्यदोरंहोरयो
वेगस्तरोलघु॥७४॥पाशनीतःसितोबद्धस्सन्धानीतोनियन्त्रि
तः॥नियामितःशृङ्खलितोनिबद्धःपाशितोरिपुः॥७५॥का
न्तंचकमनंकम्रंकमनीयंमनोहरम्॥अभिरामंरमणीयंरम्यं
सौम्यंसुंदरं॥७६॥चारुश्लक्ष्णंरुचिरंप्रशस्तंहृद्यवन्धुरम्॥

दर्शनीयं मनोज्ञं च चित्तपर्याय हारि च ॥७७॥ अवश्यायस्तु षा
रश्च प्रालेयं तुहिनं हिमम् ॥ नीहारं तत्करं विद्धि मृगांके रोहिणी
पतिम् ॥७८॥ पुन्नागे सन्नरं प्राहुस्तिलकं च विशेषकम् ॥ ल
लाटिका ललामापि पूर्णावाद्तं तथाद्रुमं ॥७९॥ अञ्जनं कज्जलं
नागं गजे पाटलमारुणे ॥ शालेपरिधिं वृक्षे च कुल्या स्त्री सारिणी
विदुः ॥८०॥ चारोवसर्पः प्रणिधिर्निगूढपुरुषश्चरः ॥ तद्वानुक्तः
सहस्त्रासः सत्यार्थे स्त्रनृतामृतम् ॥८१॥ अत्यन्तायचिरायेति
महेकस्माद्दलोदिति ॥ प्रायेणेति कुतश्चेति विभक्तिप्रतिरूपकं
॥८२॥ रम्भा स्त्री कदली चिह्नं मोचासारतरुश्च सा ॥ कीचको
ध्वनिमद्वेणुस्तालो गुणेयक्रमोद्भवः ॥८३॥ पुष्करं मुरजे पद्मे ह
स्तिहस्ताग्रनायकम् ॥ निस्तलं वर्तुलं वृत्तं स्यात्पुटं विषमोन्नतं
॥८४॥ दीर्घे प्रांशुं विशालं च वहुलं पृथुलं पृथु ॥ उल्वणं दारुणं
तिग्मं घोरं तीव्रोग्रमुत्कटम् ॥८५॥ शीतकं तिमिरं याप्यं मन्दं
विद्धि विलंवितम् ॥ सौहार्दं सौहृदं हृद्यं सौहृतं सख्यं सौरभं ॥
८६॥ मैत्री मैत्रेयिका जय्यं सहाय्यं संगतं मतम् ॥ स्वभावः प्रकृ
तिः शीलं निसर्गो विश्वसो निजः ॥८७॥ योगो गुणनिकाभ्या
सः स्यादभीक्ष्णं पुनर्मुहुः ॥ मृषालीकं मुधामोघं वितथं विफलं
वृथा ॥८८॥ विधुरं व्यसनं कष्टं कृच्छ्रं गहनं मुहुरेत ॥ समस्तं
सकलं सर्वं कृत्स्नं विश्वं तथाखिलम् ॥८९॥ शीकरं विकलं खं
डं शल्कं लेशं कणं लवं ॥ वैमेकोशं च कलहं परिवादं छलं नयेत
॥९०॥ शोणितं लोहितं रक्तं रुधिरं क्षतजासृजम् ॥ संततानाम
रताजस्त्रा न्वहं कन्यापतिंवरा ॥९१॥ उद्वाहः परिणयनं वि
वाहश्च विवेशनम् ॥ शुषिरं विवरं रन्ध्रं छिद्रं गर्तं च गव्हरम् ॥
॥९२॥ श्वभ्रं रस्यं च पातालं नरकं पात्यमेधसः ॥ अदभ्रं भूरि
भूयिष्ठं वहिष्ठं बहुलं वहु ॥९३॥ प्रचुरं नैकमानं त्यं प्राज्यं प्रभू
तं पुष्कलं ॥ भावो भवश्च संसारः संसरणं च संसृतिः ॥ ९४॥

तत्वज्ञश्चतुरोधीरस्त्यजैज्ञानमोजवंजवी॥ ऊर्जस्यूर्जस्वी
तरस्वीतेजस्वीचमनस्व्यपि॥९५॥भास्करोभासुरःशूरःप्रवी
णःसुभटोमतः॥उररीकृतमप्यूरीकृतमङ्गीकृतंतथा॥९६॥
अङ्गीकारोभ्युपगमःसत्यंकारःपणार्पणम्॥तनुत्रंवर्म
कवचंमावृत्तिर्बाणवारणम्॥९७॥कूर्पासंकंचुकंछत्रमातपत्रा
भवारणम्॥केशंशिरोरुहंवालंकचंचिकुरमीदयेत्॥९८॥
चूडापाशंचधम्मिल्लंकवरींकेशबंधनम्॥क्षेमंकल्याणंमे
भयंश्रेयोभद्रंचमंगलम्॥९९॥भावुकंभविकंभव्यंकुशलंक्षे
मंमस्त्रियाम्॥१००॥वक्तावाचस्पतिर्यत्रश्रोताशक्रस्तथा-
पितौ॥शब्दपारायणस्यान्तंनगतौतत्रकेवयम्॥१॥तथापि
किंचित्कस्मैचित्प्रतिबोधायसूचितम्॥बोधयेत्किंयदुक्तिज्ञं
मार्गज्ञःसहयातिकिम्॥२॥प्रमाणमकलंकस्यपूज्यपादस्य
लक्षणम्॥द्विसन्धानकवेःकाव्यंरत्नत्रयमपश्चिमम्॥३॥
कवेर्धनंजयस्येयसत्कवीनांशिरोमणेः॥प्रमाणंनाममालेति
श्लोकानांचशतद्वयम्॥४॥ब्रह्माणंसमुपेत्यवेदनिनदव्या-
जात्तुषाराचलस्थानस्थावरमीश्वरंसुरनदीव्याजात्तथाके-
शवम्॥अप्यम्भोनिधिशायिनंजलनिधिध्वानापदेशादहो
फूत्कुर्वन्तिधनंजयस्यचभियाशब्दाःसमुत्पीडिताः॥१०५॥

॥इतिश्रीधनंजयकृतौनिघण्टुः॥समाप्तः॥

श्रीगणेशाय नमः॥ पाशांकुशप्रभृतिभूषणभूषितांगीं सर्वांगरम्यरमणीयविचित्रवेषां॥ ब्रह्मादिसेवितपदांकमनीयरूपां दुर्गां भजाम्यसततं त्रिपुरारिसेव्यां॥ १॥ शब्दाश्चबहुविधालोके संति यद्यपि विस्तरात्॥ तथापि केचिद्वर्ण्यंते ग्रंथाभावस्य हेतवे॥ २॥ जातिशब्दाः क्रियाशब्दा गुणशब्दास्तथापरे॥ संज्ञाभेदा भवंत्यन्नसंक्षेपादुच्यते विधिः॥ ३॥ गौरश्वः पुरुषो हस्ती शकुनिब्राह्मणस्त्विति॥ राधते यजते शेते भवती येवमादयः॥ ४॥ रक्तः श्वेतो वृंदः कृष्णा एतं डित्थकपित्थवत्॥ पुंसि केचित्त्रियामन्ये क्लीबे केचिदुदीरिताः॥ ५॥ स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः॥ अनयोरंतरं यच्च तद्धि प्रोक्तं नपुंसकं॥ ६॥ दृष्ट्वा जैमिनिकोशसूत्ररचनां कात्यायनीयं मतं व्यासीयं कविशंकरप्रभृतिभिर्यद्भाषितं निश्चयात्॥ यच्चानंदकविप्रवीररचितं वाद्धं चयद्दृंडिना यच्चाल्ह्यापनशाश्वतादिकथितं कुर्वेऽभिधानाद्भुतं॥ ७॥ माकुर्वं तुभयं करालकलितः प्रायः श्रुतेर्नाशनात्सर्वं ज्ञातजनाद्नेकककिला हीनप्रगल्भाश्रयात्॥ उद्धारं भवतां विधाय हृदये भो भ्रातरोयं मया कर्तव्यः परमोद्यमः श्रमविधेः शब्दात्कुतः स्त्रीदृश॥ ८॥ किं पद्यभाररचनाभिरनेकवारं किं वल्गनैः किमिह दर्पपरीतवाक्यैः॥ यल्लभ्यते किल समाधिविधेर्विधानात्किं तत्र विस्तरविवेचनशाभिरर्थैः॥ ९॥ कोवेद शब्दजलधेरखिलस्य पारं सारं विधाय विधिना मनसो विचारात्॥ शंबूकमर्कटझषादिभिरेव संगः प्रायो भवेदिह न रत्नमिलिः कदापि॥ १०॥ यावान्कश्चित्रांतः शब्दो न नपुंसके हि वाच्यः॥ वर्जेद्धि पुत्रमंत्रश्चित्रानेवं गरित्रं च॥ ११॥ यावानिति समुच्चयो कश्चिद्यस्त्रांतः शब्दः स नपुंसके वोच्यः॥ पुत्रमंत्रश्चित्रशब्दान्वर्जयित्वेत्यर्थः यथा॥ सूत्रं शस्त्रं शास्त्रं भित्रं पत्रं पवित्रं च॥ गात्रं पोत्रं पात्रं दात्रं सत्रं परित्रं चेत्यादि॥ अयं पुत्रः सुतः अयं मंत्रो होमवाच्यो वेदश्च हि शब्दोनुक्तसमु

च्चयार्थ।तेनछत्रछात्रविष्णुमित्रादीनांपुंस्त्वप्राप्तेःसिद्धिः।अयं
छत्रोनर्तकःआतपवारणवाचकस्यछत्रशब्दस्यनपुंसकतैव।
इदंछत्रंवर्षातपवारणं।अयंछात्रोऽध्येता।अयंविष्णुमित्रःकश्चि
त्पुरुषः।यात्रामात्राभस्त्रादंष्ट्राविद्यात्रियांवरत्राच।इदंतय
च्चैकाचूशरद्दरदृषत्प्रावृषश्चैव॥१२॥यात्रामात्रादिकान्शब्दा
न्स्त्रियांस्त्रीलिंगेविद्याज्जानीयादित्यर्थः।इयंयात्रातीर्थादि
गमनं।इयंमात्राऽक्षरावयवस्तोकंच।इयंभस्त्रालोहधमनी।
इयंदंष्ट्रादशनविशेषः।इयंवरत्रात्रिगुणीकृतारज्जुः।अत्रादी
नामपित्रांतत्वान्नपुंसकत्वप्राप्तेः।ब्रूमः।अत्रत्यप्राभावात्तद्वस्त्र
भावादिति।भावांतंत्रच।भाववाचकाद्वातोस्त्रप्रत्ययःस्यात्॥
इंचउंचइदूतौतावंतेयस्यतदिदंशब्दरूपमीदूदंत अंतःशब्दः
प्रत्येकमभिसंबध्यते।द्वंद्वांतेश्रूयमाणपदंप्रत्येकमभिसंबध्य
तेइत्युक्तत्वात्।एकोच्पस्यतत्एकाच्एकस्वरमित्यर्थः।इ
दूदंतयच्चैकाच्स्त्रियांतच्छब्दरूपंभवति।इयंस्त्रीयोषित्।इ
यंश्रीर्देवताविशेषःप्रभुशक्तिश्च।इयंभ्रूरक्ष्णोरुपरिरेखा।एका
जितिकिं।सेनानीः।ग्रामणीः।शरदादयोपिस्त्रियां।इयंशरत्
ऋतुविशेषः।इयंदरत्ग्रीवास्थानं।इयंदृषत्शिला।इयंप्रा
वृट्जलधरसमयः।चकारःसमुच्चयार्थः।एवकारोवधारणे॥स्थू
णोर्णेस्त्रीयोगेत्वोगृहशशपूर्वकयोर्नपुंसकता।सर्वस्याक्षिनाम्नि
जलनाम्नश्चैवमुक्तापः॥१३॥स्थूणोर्णदिति।स्थूणाचोर्णाचस्थूणो
र्णेस्त्रीयोगेत्वःस्त्रीलिंगेभवतइत्यर्थः।इयंस्थूणाकाष्ठमयीद्रुकर्णि
का।इयमूर्णामेषलोमा।तयोरेवस्थूणोर्णयोर्यथासंख्यंगृहशश
पूर्वकयोर्नपुंसकत्वं।इदंगृहस्थूणं।इदंशशोर्णंगृहशशपूर्वक
योरितिकिं।इदमभूत्इयंशालास्थूणा।इयमेषोर्णा।सर्वशब्दोनि
विशेषवाची।सर्वमक्षिनामजलनामचनपुंसकेभवति।अक्षिना
मतावत्।इदमक्षिलोचनं।नेत्रंनयनचक्षुर्दृगंबकमीक्षणादि॥

जलपर्यायद्दंजलंतोयंसलिलमंबुनीरंवार्वारिकाननमुदकंवन
मित्येवमादि॥जलशब्दत्वादप्शब्दस्यापिनपुंसकत्वंप्राप्नोतीत्य
हमुक्त्वापःअप्शब्दंवर्जयित्वेत्यर्थः॥अस्यहिस्त्र्यधिकारात्स्त्री
त्वं॥इमाआपःबहुवचनांतःसदैव॥जलकुसुमनामसर्वंनपुंसकं
स्यात्पद्मस्तुविभाषया॥अभ्रादंबुदाख्यादिकेशनखदंतसंज्ञा
श्च॥१४॥जलकुसुमनामसर्वंनिर्विशेषंनपुंसकलिंगंभवति तद्यथा
॥इदंकमलंपंकजंकोकनदंकल्हारंकुशेशयमित्यादि॥जलकुसु
मद्वारेणनपुंसकत्वेप्राप्तेपद्मस्यविभाषाक्रियते॥इदंपद्मं॥अयंप
द्मइतिउक्तंच॥वसंतेशीतभीतेनकोकिलेनवनेरुतं॥अंतर्जल
गताःपद्माःश्रोतुकामाइवोत्थिताः॥ऋतेशब्दोवर्जनार्थेवर्तते
॥अभ्रशब्दमेकंवर्जयित्वाअंबुदामेघास्तेषामाख्यासंज्ञापर्याया
इत्यर्थःतेंबुदाख्याःशब्दाःपुंसिभवंतितद्यथा॥इमेअंबुदामेघाः
पयोधराघनजीमूताजलधराबलाहकाःकंधराइत्येवमादयः॥इ
मेकेशाः॥इमेदंताः॥इमेनखाः॥कंठस्तनबाहूनांसंज्ञाःपुंसिस्त्रि
यांभवेद्ग्रीवा॥पृष्ठललाटांशोदरजत्रूणिनपुंसकानिस्युः॥१५॥कं
ठसंज्ञाःस्तनसंज्ञाःबाहुसंज्ञाश्चपुंसिभवंति॥अयंकंठः॥गलइ
त्यादिः॥स्तनसंज्ञाश्च॥अयंस्तनःकुचःपयोधरइत्यादिः॥बाहु
संज्ञाश्चभुजस्तरणःधरणःचालनइत्यादिः॥कंठसंज्ञकत्वाद्ग्रीव
शब्दस्यापिपुंसिप्रयोगःप्राप्नोतीत्याह॥स्त्रियांभवेद्ग्रीवा॥ग्रीवाश
ब्दस्यस्त्रीलिंगताभवति॥इयंग्रीवाशिरोधराकंधराइत्येवमादयः
॥पृष्ठादयःशब्दानपुंसकेस्युः॥तद्यथा॥इदंपृष्ठंपार्श्वयोर्यष्टिःइ
दंललाटंभ्रुवोरुपरिस्थानं॥इदमंशस्तनयोरुपरिस्थानं॥इदमुद
रंजठरं॥इदंजत्रुस्कंधसंबंधि॥इत्येवमादयः॥ऊर्मिध्वन्यंजल
यःपुंस्योष्ठकपोलगुल्फसंज्ञाश्च॥पत्रैरश्वरुदोरवस्याद्दहलमंध
कारश्च॥१६॥ऊर्मिश्चध्वनिश्चअंजलिश्चऊर्मिध्वन्यंजलयः॥
एतेशब्दाःपुंसिभवंति॥अयमूर्मिस्तरंगः॥अयंध्वनिःशब्दःअ

यमंजलिः करपुट ओष्ठकपोलगुल्फसंज्ञाश्चसंज्ञाशब्दः प्रत्येक
मभिसंबध्यते ओष्ठश्चकपोलश्चगुल्फश्च ओष्ठकपोलगुल्फा
॥ एतेषांसंज्ञाःपर्यायास्तेपुंसिभवंति॥ अयमोष्ठः अधरदंतच्छ
दः अयंकपोल गंडइत्येवमादयः॥ अयंगुल्फः पादग्रंथिः घुंट
घूंठइत्येवमादयः घञ्चएरच्चऋदोरप्पदरुजवेगस्पृशोघञि
त्येवमादिनाप्रकरणेघञोविहितइति॥ येनविधिस्तदंतस्येति घ
ञ्प्रत्ययांताःशब्दा पुंसिभवंति॥ तद्यथा॥ पादःरोगःवेगःस्पर्शः
पाकःत्यागःयोगःप्रसादःभेदःछेदःदाहःदोषःप्रकारविकारइ
त्येवमादयः॥ एरजिति॥ एरजईवर्णांतादच्प्रत्ययःस्यात्॥
अयंजयः नयः तथाऋदोरप्॥ ऋवर्णांतादुवर्णांताच्चधातोरप्
प्रत्ययःस्यात्॥ तत्रऋवर्णांतात्॥ अयंकर॥ वर॥ भरः॥ शरः
नरः॥ इत्येवमादय उवर्णांतात्॥ अयंलवः॥ पवः॥ भवः इत्येव
मादयः॥ घञंतादंधकारशब्दस्यापि नित्यंपुंस्त्वस्यादित्याह॥
बहुलमंधकारश्च॥ अंधकारो बहुलंपुंलिंगेभवति॥ विभाषाभ
वतीत्यर्थः॥ इदंअधकार॥ अयंअंधकारः॥ तथाचोक्तं॥ नेहाग
मोस्तिशलभस्यनमारुतस्यस्नेहक्षयोपिनभवेत्प्रथमेप्रदोषे
अव्यक्तवस्तुपुरुषप्रतिबोधितेनपारावतेनपतताकृतमंधका
रं॥ प्राण्यगमिदंतंवस्तिकुक्षिपाणीन्विमुच्यसर्वस्त्री॥ जंघाशि
रास्तुघानासिकाचूडावसाचैव॥ १७॥ प्राणोनामवायुःसोस्यास्ति
तिप्राणीतस्यांगंप्राण्य गंइकारः अंतेयस्यतदिदंतं॥ तत्सर्वंस्त्री
लिंगंभवति॥ तद्यथा इयंकटिःश्रोणिः अंगुलिःपंक्तिरित्यादि व
स्तिकुक्षिपाणीनामपीदंतत्वात्स्त्रीत्वेप्राप्तेबाधःक्रियते॥ ए
तान्विमुच्यवर्जयित्वेत्यर्थः॥ पुंसीत्यधिकारात्तेषांपुंस्त्वमेवभव
ति॥ अयंवस्तिःनाभेरधः॥ अयंकुक्षिरुदरस्थानं॥ अयंपाणि
र्हस्तइति॥ जंघादयःशब्दाःस्त्रियांभवंति॥ इयंजंघाजानुनोर
धस्तात्॥ पादस्योपरिस्थानं च॥ इयंशिरादेहधारिणी॥ इयंतुष

पुत्रवधूः॥इयंनासिकागंधहारिणी॥इयंचूडाशिखा॥इयंवसा शोणितविकारः॥स्नेहश्च॥स्रक्स्रुक्स्फिक्त्वग्वाग्योषितो दिवियास्त्रियांद्युनावोच॥दीधितिमेकामुत्क्वारश्म्यभिधानं तुपुंस्येव॥१८॥स्रगादयः शब्दाःस्त्रियांभवंति॥तद्यथा॥इयंस्रक् माला॥इयंस्रुक्यज्ञोपकरणभांडं॥इयंस्फिक्कटिप्रदेशः॥इयंत्वक्बहिश्चर्म॥इयंवाक्वाणी इयंयोषित्बाला॥द्यौश्च नौश्चद्युनावोचस्त्रियांभवतः इयंद्यौः स्वर्गः॥इयंनौः॥जलतरणि॥दिशब्दःपादपूरणेदीधितिमेकांवर्जयित्वारश्मिवाचकाःशब्द पर्यायाश्चयेतेपुंसिभवंति॥तद्यथा इमेरश्मयःप्रग्रहाःकिरणा अंशवःपादाःमयूखाः॥अभीषवः॥गभस्तयः॥घृणयइत्येव मादयः॥दीधितिशब्दःस्त्र्यधिकारात् स्त्रियांभवति॥इयंदी धितिः॥तुशब्दःपादपूरणे॥मूर्द्धोक्षतक्षमज्जश्लेष्मात्माश्म युवपूषराजभीरहितं॥सर्वद्व्यच्कंनांतंनपुंसकेपुंसिवाभवेद्ब्र ह्मा॥१९॥मूर्द्धन् उक्षन् तक्षन् मज्जन् श्लेष्मन् आत्मन् अश्म न् युवन् पूषन् इत्येतैःशब्दैरहितंवर्जितंयदन्यत् द्व्यच्कं द्वि स्वरंचनांतंप्रातिपदिकंतत्सर्वंनपुंसकंभवति॥यथाइदंच र्मवर्मशर्मभस्मसद्मलोमइत्येवमादयः॥मूर्द्धादयोपिनांत त्वात्द्व्यच्काअतस्तेषामपिनपुंसकत्वाप्राप्नोति॥तदर्थमिति प्रतिषेधःकृतःमूर्द्धोक्षतक्षेत्यादिपुंलिंगाधिकारात्पुंसिभ वंति॥यथाअयंमूर्द्धाशिरः॥उक्षावृषभः॥मज्जासारः॥तक्षा वर्द्धकिः श्लेष्माधातुविकारः॥आत्माशरीरस्थः॥अश्मानी लः॥युवातरुणः॥पूषादित्यः पुंसिवाभवेद्ब्रह्मेति॥द्व्यच्कत्व न्नांतत्वाच्चब्रह्मशब्दस्यनपुंसकत्वेप्राप्तेपुंस्त्वंवाविधीयते ब्रह्मशब्दोवानपुंसकलिंगोभवति॥इदंब्रह्मावेदाध्ययन मीश्वरश्च॥अयंब्रह्माप्रजापतिः॥यद्येवंयतद्व्यच्कंनांतंतन्न पुंसकं॥एवंसतिराजन्शब्दस्यापिनपुंसकत्वास्यात पुंस्यं

तर्भावोद्रष्टव्यः॥१९॥त्रुटिसीमसंध्यारात्रयःस्त्रियांधूलिवेणि
खार्यश्च॥पुंसिनिशीथोज्योत्स्नादयाशलाकास्त्रियांनित्यं॥२०
एतेशब्दाःस्त्रियांभवंतिइयंत्रुटिःस्वल्पः॥इयंसीमाग्राममर्या
दा॥इयंसंध्यादिनावसानं॥इयंरात्रिःशर्वरीइयंधूलिःपांसुः॥इ
यंवेणीकेशरचना॥इयंखारीपरिमाणविशेषःनिशीथशब्दःपुं
सिभवति॥अयंनिशीथोर्धरात्रः॥ज्योत्स्नादयाशलाकाःस्त्रियां
भवंति॥इयंज्योत्स्नाचंद्रप्रभा॥इयंदयाकरुणाइयंशलाकालो
हधमनी॥नित्यग्रहणंविभाषानिवृत्त्यर्थं॥पुंयोगेकर्णहनूनपुं
सकेश्मश्रुजानुगुदशब्दाःएकाभिधानतास्यादस्त्राश्रुणोर्नित्यं॥
॥२१॥पुंसोयोगःपुंयोगःतस्मिन्कर्णहनूभवतः॥यथाअयंकर्णःश्रो
त्रंकुंतीपुत्रश्चहनुःकपोलप्रदेशः॥श्मश्रुजानुगुदशब्दाःनपुंसकेभवं
ति॥इदंश्मश्रुमुखैकदेशरोमराजिः इदंजानुजंघामध्यस्थानं।
इदंगुदमपानं॥अभिधीयतेऽनेनेत्यभिधानंएकंचतदभिधानं
चतस्यभावःएकाभिधानतास्यात्भवेदित्यर्थः॥अस्त्राश्रुणो
र्नित्यनपुंसकताभवति॥इदमस्त्रं॥इदमश्रु॥नयनजलमिति॥
एकएवार्थःनित्यवचनंपूर्ववत्॥२१॥घुसकिरुपसर्गपूर्वःपुंस्यः
न्योपपदेवेषुपूर्वःस्त्री॥येभ्योनञ्तान्युस्युक्तान्याञ्चविनावि
द्धि॥२२॥घुइति॥दाधाघ्वदावितिषण्णांधातूनांघुसंज्ञाविहिता
॥सहकिनावर्त्ततइतिसकिः उपसर्गेघोःकिरित्यादिनाविहितःकि
र्त्रत्ययोगृह्यतेउपसर्गाप्रादयः॥उपसर्गाःक्रियायोगइति॥उप
सर्गःपूर्वोयस्यसएवपुंलिंगोभवति॥यथाअयमादिनिधिः॥प्रणि
धिःआधिःसन्निधिः॥इत्येवमादयः॥ अन्योपपदकर्मण्यधि
करणेचेतिकिप्रत्ययः॥अयमंभोधिः॥जलधिःउदधिःतोयधिः
शरधिःइत्येवमादयः॥इषुशब्दोपपदेवास्त्री॥इयमिषुधिः॥
अयमिषुधिः॥तूणीरंयेभ्योधातुभ्योनञ्प्रत्ययः॥तान्युस्युक्ता
न्विद्धिजानीहि॥यांचशब्दंवर्जयित्वा॥यज याच यत विछ

प्रच्छ॥रक्षोनडितिन ड्वप्रत्ययः॥अयंयज्ञः॥यत्नः॥विष्णुः॥प्र
श्नः॥रक्ष्णः एवंतर्हियांचशब्दस्यापिनङंततान्नपुंस्त्वंस्यात्
॥इत्यतआह॥यांचोविनेति॥स्त्र्यधिकारात्स्त्रीयांचार्थेन॥२२
तनुकायशरीराणिस्त्रीपुन्नपुंसकेषुजानीहि॥दधिसक्थ्य
स्थीनिस्युर्नपुंसकेस्त्रीतुकक्षास्यात्॥२३॥एतान्शब्दान्यथा
संख्यंस्त्रीपुन्नपुंसकेषुविद्धि॥इयंतनुः॥अयंकायः॥इदंशरीरं
॥दधिसक्थ्यस्थिशब्दानपुंसकेस्युः॥यथाइदंदधि॥क्षीरविका
रः॥इदंसक्थिउर्वोर्मध्यं॥इदमस्थिकीकसं॥कक्षाशब्दःस्त्रियां
भवेत्यथाइयंकक्षाबाहुमूलं॥अन्यच्च॥जघनाभरणेस्त्रीणां
करीणांमध्यबन्धने॥अवस्थासुचहर्म्याणांनित्यंकक्षान्यव
स्थिता॥२३॥सुमनोप्सरोविरहितमद्यन्तमसंतंतुपुंसिस्यात्॥
द्यन्तंपुनर्नपुंसकप्रकृतादन्यत्रवैजरसः॥२४॥सुमनस्अप्सरस्
इत्येताभ्यांविरहितमुज्झितमित्यर्थः॥अस्अंतेयस्यतदिदमसं
तंपुंसिभवेदित्यर्थः॥अयमंगिराःचंद्रमाःस्थूलशिराः॥पुरूरवाः
॥उच्चैश्रवाः॥दुर्वासाः॥पृथुयशाइत्यादयः॥सुमनसोप्सरसश्च
स्त्र्यधिकारात्स्त्रियांप्रवृत्तिः॥इमाःसुमनसःकुसुमानि॥इमाअ
प्सरसोदेवस्त्रियः॥द्यन्तमसंतंनपुंसकंभवति॥इदमोजःतेजः
वर्चःशिरःयशःछंदःस्रोतःचेतःपयः॥तपःअंभःजरस्शब्दस्या
पिनपुंसकतास्यादित्यतआहान्यत्रवैजरसः॥नपुंसकात्प्रकृता
च्चपुल्लिंगादन्यस्मिन्जरस्शब्दोभवति॥स्त्रियां॥इयंजराबृद्ध
भावः॥२४॥पुंसिक्षुरखुरबिंदुक्षुपायुमणिकीलकेलिबलयः॥नि
घसंघोद्घोपघ्नोघविघ्नघर्मार्घवर्णाश्च॥२५॥एतेशब्दापुंसिभवं
ति॥तद्यथा॥अयंक्षुरः॥नापितोपकरणः अयंखुरःपशुपादः॥
अयंबिंदुःविसर्जनीयावयवः॥अन्यच्च॥अयमिक्षुःस्यजातिः
॥अयंपायुःअपानं॥अयंमणिः॥रत्नंकीलःशंकुःप्रहरणविशेष
॥अयंकेलिः॥हासः॥अयंकलिः॥कलहः॥अयंबलिर्दैत्यः॥ए

जगृह्यदेवतोपहारौच॥निघादयःशब्दाःपुंसिभवंति॥अयंनिघःपर्वतः॥अयंसंघःसमूहःअयमुद्घःप्रशस्तः॥अयमुपघ्नआश्रयः॥पर्वतश्च॥अयमोघोनदीवेगः॥पुरुषारंभश्च॥विघ्नःकर्मनिघातः॥घर्मोनिदाघः॥अर्घःपूजामूल्यविशेषः॥वर्णोहरितपीतादिः॥ब्राह्मणादिः॥अकारादीनिचाक्षराणि॥२५॥पणगुणगणकणशोणाःकिणफणघुणशाणवाणचूर्णाश्च॥नित्यंहिपुंसिपंथावाष्पोष्माध्वानश्चविज्ञेयाः॥२६॥पणादयःशब्दाःपुंसिभवंति॥अयंपणोविंशतिगंडकः॥अयंगुणःसंख्यारव्यःसुक्लादिपाटलादिश्चअयंगणःसंघातअयंकणःपरमाणुः॥शोणोनदःकिणोनिकषःफणोभुजंगफणःघुणःकीटविशेषः॥शाणःपाषाणविकारः॥वाणःशरःअसुरःघृष्टिकाच॥अयंचूर्णःशकलःखंडइत्यर्थः॥अयंपंथामार्गः॥अयंबाष्पोश्रु॥अयमूष्माघर्मः॥अयमध्वामार्गःनित्यग्रहणंविभाषानिवृत्यर्थं॥२६॥ ॥नपुंसकेश्वभ्रतृणरणार्णानि॥वीणातूणाघोणाघृणास्तुनियतंस्त्रियांविद्यात्॥२७॥एतेनपुंसकलिंगेभवंति॥इदंश्वभ्रंगर्त्तः॥इदंतृणंगृहछादनद्रव्यविशेषःरणंयुद्धं॥ऋणमुद्धारः॥अधमर्णश्चएतान्शब्दान्स्त्रियांनियतंनिश्चितंविद्यात्॥इयंवीणावाद्यविशेषः॥तूणाइषुधिः॥इयंघोणानासिका॥इयंघृणादयाबुद्धिः॥तुशब्दः॥पादपूरणे॥२७॥ अदन्तोंतमकर्त्तरिनन्नपुंसकेविद्यान्निःस्त्रियामेव॥पैभावेःणापैतौपुंस्यक्तौमन्युमृत्यूच॥२८॥ अनअंतेयस्यतदिदमनोंतंअकर्त्तरिअनप्रत्ययांतंयत्प्रातिपदिकंतन्नपुंसकेविद्धिजानीहि॥नपुंसकाद्भावेक्तइत्यत्रवर्त्तमानेल्युट्चेतिल्युट्॥युवोरनाविस्यनादेशःवचनं॥भजनंभाजनं॥पानं॥आसनं॥प्रपाणं॥शासनं॥अधिकरणमित्यादि॥अकर्त्तरीतिकिं॥नंद्यादिभ्योल्युट्॥नंदनः॥मरणःमदनः॥कुलनः॥शतनः॥दमनः॥संकर्षण॥मधुसूदनःजनार्दनइत्यादि॥अनिःस्त्रियामेव॥एवका

रोबधारणार्थः आक्रोशेन ध्वनिः ।पश्चादूयमभोजनिः अकारणि अहरणिः अ खा दूनिः॥अशरणिरित्येवमादिः॥अणचअप्रअ घापैघौतौपुंस्युक्तौ॥णौ अणच्चेत्यण्प्रत्ययः। त्यागः। उपदेश उपसर्गःइत्यणप्रत्ययः॥निघःपर्वतः॥किंचान्यौमन्युमृत्यू पुंसिभवतः॥अयंमन्युर्दयाशोकश्चमृत्युर्नाशः॥२७॥ पट पुटकटघटचंटवाटजूटवटाद्रिपुंस्युक्ताः॥अवटखटपट्टकि राटकीटाश्चकूटतटयोश्चनपुंसकता॥२८॥एतेपटादयःश ब्दाःपुंसिभवंति॥अयंपटःप्रावरणः॥पुटःपत्रस्य॥कटस्तृण स्य॥कटोगजकुंभश्चघटःकलशः॥चंटःफलनिबंधनं॥वाटःमार्ग जूटःकेशबंधनं॥वटोवृक्षविशेषः॥अवटःकूपः॥खटःशिरसिप्रह्ला रः॥पट्टःराजप्रसादः॥किराटोवणिक्॥कीटःक्रिमिः॥कूटतटशब्दौ नपुंसकेभवतः॥इदंकूटंद्रव्यस्थानं॥इदंतटंनदीकूलं॥२८॥ घंटाज टासटानांप्रथमाप्रकृतिर्वसाशिफानांचस्वर्नाम्नांपुंयोगस्त्रिविष्ट पंस्यादुभयहीनं॥२९॥एतेघंटादयःशब्दास्त्रियांभवंति॥प्रथमा कृतिःस्त्रीलिंगमित्यर्थः॥इयंघंटावाद्यविशेषः॥इयंजटाकेशविन्या सः॥इयंसटाकेशरः॥इयंवसामेदः॥इयंशिफाकंदः॥अयंस्वर्ग नाकः॥अयंत्रिदिवःस्वर्गादिनामत्वात्पुंस्त्वंत्रिविष्टपस्यप्राप्नोती त्यतआह॥त्रिविष्टपंस्यादुभयहीनं॥नस्त्रीनपुमानित्यर्थः॥इदं त्रिविष्टपंस्वर्गः॥२९॥ संवत्सरगिरिमासार्णवर्त्तुदेवासुराभिधानानां ॥नित्यंपुं योगःस्याच्छरासिपंकारिनाम्नांच॥३०॥अभिधानशब्दः प्रत्येकमभिसंबध्यते॥संवत्सराभिधायिनांशब्दानांसंवत्सरपर्या याणांच॥गिर्यादिपर्यायाणांच॥पुंयोगःस्यादित्यर्थः॥ तद्यथा॥अ यंसंवत्सरःहायनोब्दइत्यादि॥अयंगिरिःपर्वतःधरशैलइत्यादि॥मा साभिधायिनां॥अयंमासः॥द्विपक्षः॥ मासविशेषोपिपुंसिअयंचैत्रः वैशाखःज्येष्ठःआषाढइत्यादि॥अर्णववाचिनां अयमर्णवः॥समु द्रःसागरःपारावारःसरित्पतिरित्यादि॥अयमृतुःवसंतः॥ग्रीष्मः

